के कारण विश्वामित्र नाम से प्रसिद्ध हुए। इनके पुत्र और शिष्य परम्परा भी इसी नाम से प्रसिद्ध हुई। अतः भिन्न भिन्न कालमें भिन्न भिन्न विश्वामित्र हुए। हरिश्चन्द्रोपाख्यान में वर्णित विश्वामित्र भिन्न थे। तथा रामचन्द्र के काल में भिन्न। विश्वामित्र मैथिल थे और वृहद् विष्णु पुराण तथा यामल सारोद्धार के मिथला खण्ड के अनुसार मिथिला में कौशिकी नदी के तट पर इनका आश्रम था। इन्ही की वंश परम्परा में उत्पन्न याज्ञवल्क्य महर्षि मिथिला में गौतम आश्रम के समीपवर्ती, जयन्तपुर से अति सन्निहित धनुर्यज्ञ महारण्य में निवास करते थे।

विश्वामित्र महा महर्षि थे। इनके ३७८ मन्त्र हैं तथा इनके पिता पितामह तथा पुत्र पौत्र परम्परा के आर्षेय ४३८ इस तरह कुल मिलाकर ८१६ मंत्र इन विश्वामित्रों के परिगणित हुए हैं ॥ इति ॥

प्रद्युम्नशर्म्मा ओझा।

विद्याधर का रास्ता,
जयपुर (राजस्थान)

१-६-६१



॥ श्रीः ॥

# विषय-सूची

विषयाः पृष्ठाङ्काः



॥ इति ॥

॥ श्रीः ॥

ब्रह्मविज्ञाने

## दिव्यविभूतेः उपविभागे

# ★ महर्षिकुलवैभवम् ★

## कश्यपः

( १ ) कश्यपात् सकलं जगदित्याहुः। तमेतं कश्यपं व्याख्यास्यामः-

(२) सूर्य्यकिरणानां परस्परसंघर्षणादुत्पन्नाः सूर्य्यकिरणस्थाना आपो मरीचय उच्यन्ते। तत्प्रत्यक्षकर्त्ता विद्वानपि यशोनाम्ना मरीचिरुच्यते। तस्य मरीचेर्विदुषःपुत्रः कश्चिद् विद्वानासीत् स कूर्म्मं नामादित्यमपश्यत्। येन रूपेणायमादित्यः सृष्टिं सृजति तद्रूपावच्छिन्नोऽयमादित्यप्राणसंघातः कूर्म्मः प्राणमयः सप्तपुरुषः पुरुषः प्रजापतिः, अतश्चैष कूर्म्मः प्रजापतिः। कश्यपपश्वाकारो हि तद्रूपम्। तद्रूपावच्छिन्नस्तु प्राणो लोकत्रयानुविधैतद्धिघृतमध्वात्मकरसत्रयसध्रीचीनो द्यावापृथिव्यः। एषां च रसानां त्रिलोकव्यापिनीष्वप्सु प्रविष्टैः सूर्य्यप्राणविशेषैः समन्वयात् परिपाकाच्च तत्र तत्र लोके प्रत्युत्पत्तिरिति मधुविद्यादिभिरवगम्यते। स एष कूर्म्मो नाम रसत्रयरूपाकारित एवादित्यप्राणः सर्वविधपिण्डजातानामुत्पत्तिहेतुरुपपद्यते।

(३) तथा च वाजिश्रुतौ श्रूयते —

"सोऽयं पुरुषः प्रजापतिर्ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम्। सैवास्मै प्रतिष्ठाऽभवत्,तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत। सोऽपोऽसृजत।

सोऽनया त्रय्यां विद्यया सहापः प्राविशत् । तत आण्डं समवर्तत । ततो ब्रह्मै व प्रथममसृज्य त त्रय्येव विद्या । मुखं ह्य तदग्नेर्यद् ब्रह्म । अथ यो गर्भोऽन्तरासीत् सोऽग्निः । अथ यत्कपालमासीत् सा पृथिव्यभवत् । तां संक्लिश्याप्सु प्राविध्यत् । तस्यै यः पराङ् रसोऽत्यक्षरत् स कूर्म्मोऽभवत् " ( ६।१।१ )

( ४ ) अपि च श्रूयते तत्रैव—

"रसो वै कूर्म्मः । यो वै स एषां लोकानाम् अप्सु प्रविद्धानां पराङ् रसोऽत्यक्षरत् स एष कूर्म्मः । यावानु वै रसस्तावानात्मा । स एष इम एव लोकाः । तस्य यदधरं कपालम् अयं स लोकः । तत्प्रतिष्ठितमिव भवति, प्रतिष्ठित इव ह्ययं लोकः । अथ यदुत्तरं सा द्यौः । तद् व्यवगृहीतान्तमिव भवति । व्यवगृहीतान्तेव हि द्यौः अथ । यदन्तरा तदन्तरिक्षम् । स एष इम एव लोकाः । तमभ्यनक्ति दध्नामधुनाघृतेन । दधि हैवास्य लोकस्य रूपम्,घृतमन्तरिक्षस्य, मध्वमुष्य । दधि हैवास्य लोकस्य रसो,घृतमन्तरिक्षस्य,मध्वमुष्य । स यत्कूर्म्मो नाम । एतद्वैरूपं कृत्वा प्रजापतिः प्रजा असृजत । यदसृजत अकरोतत् । यदकरोत् तस्मात्कूर्म्मः । कश्यपो वै कूर्म्मः । तस्मादाहुः—सर्वाः प्रजाः काश्यप्य इति । स यः स कूर्म्मः । असौ स आदित्यः । प्राणो वै कूर्म्मः । प्राणो






हीमाः सर्वाः प्रजाः करोति । द्यावापृथिव्यो हि कूर्म्मः । अवका अधस्ताद्भवन्ति,अवका उपरिष्टात् । आपो वा अवकाः " इति ॥

(५) इह हि कश्यपस्य द्यावापृथिवीभ्यामभिसंबन्धो लभ्यते । द्यावापृथिवीशब्दस्य च प्रवृत्तिर्यद्यपि दृश्यकपाल[1] अण्डकपाल[2] आयतन[3] साम[4] शुक्र[5] भेदात् पञ्चलक्षणरहस्ये व्याख्याता,तथाप्यत्र संभवतो दृश्यकपालानुगते एव ते गृह्येते । तल्लक्षण च श्रूयते हविर्यज्ञब्राह्मणे—

(६) तद्वा एष एव वषट्कारो य एष तपति ! स उद्यन्नेवाभूमधिद्रवति । अस्तं यन्निमामधिद्रवति । तस्या अमुष्या अवस्ताल्लक्ष्म—चन्द्रमा नक्षत्राणि सूर्य्यः । अथोपरिष्टाल्लक्षणा पृथ्वी । तस्या अस्या उपरिष्टाल्लक्ष्म—ओषधयो वनस्पतय आपोऽग्निरिमाः प्रजाः" इति ।

(७) अयमत्राभिसन्धिः । क्वचित् प्रान्तरे निरावरणप्रदेशेऽवस्थाय द्रष्टुः सर्वतः समतलमण्डलात्मकाधःकपालरूपया पृथिव्या संलग्नावनत—प्रान्तोन्नतमध्योर्ध्वकपाला नीलवर्णा हीयं द्यौर्दृश्यते । तथा च विसदृशकपालद्वयात्मिका सेयमुभयी द्यावापृथिवी सर्वस्यैतस्य दृश्यप्रपञ्चस्यावपनभूता भवति। तयोरुर्ध्वाधरकपालयोरन्तरतो यदावपनं तदन्तरिक्षम् । तथा चैतत् कपालद्वयावच्छिन्नं यदन्तरिक्षं तदवच्छिन्नो यः प्राणघनः स कूर्म्म इत्याह "द्यावापृथिव्यो हि कूर्म्म " इति । तद् द्रष्टुः स्थित्युपलक्षितभूमिबिन्दुस्तद् दृश्यान्तरिक्षावच्छिन्नस्य कूर्म्मप्राणस्य साक्षी भवति । तद्बिन्दुसाक्षिकः कूर्म्मस्तद्बिन्दूपलब्धजन्मनः प्राणिनो जन्मदाताऽवसीयते । यावदेव हि द्रष्ट्रा दृश्यतेऽन्तरिक्षं तदवच्छिन्नः प्राणघन एव तत्र जन्मोपधायकबिन्दौ संनिधत्ते । तद्देशे जायमानस्तावतैव प्राणघनेन कृतात्मा भवतीत्यतस्तस्य प्राणघनस्य कर्तृत्वात् कूर्म्मशब्देन व्यपदेशः । कश्यपाकृतिश्च स नित्यं दृश्यते । तस्मादसौ लक्षणया कश्यप—शब्देनापि व्यपदिश्यते । यद्वा यथाकृतिः कश्यपस्तथाकृत्या संनिविष्टः प्राणः कश्यपो वेदितव्य इत्युक्तं भवति । एष च कश्यपशब्दःवषट्कारः स्वरूपसमर्पकः ।

कच्छपशब्देन कमठशब्देन वा प्रसिद्धे पशुविशेषे रुढ़ः । कशामर्हति कश्यः स्कन्धाधस्तलदेशः कच्छ इति प्रसिद्धः । तेन पिबतीति वा कश्येन पादौ गोपयन्नात्मानं पातीति वा व्युत्पत्तेः । इत्थं चाकृतिसाधर्म्याद् द्यावापृथिव्ये कूर्म्मे कश्यपशब्दस्य, कश्यपे च तस्मिन् पशौ कूर्म्मशब्दस्य व्यतिषङ्गेन प्रवृत्तिः । अथवा मुख्ययैव वृत्या कश्यपशब्दः कूर्म्मो वर्तते । श्रूयते हि— "कश्यपः पश्यको भवतीति" वर्णव्यत्यासेन च शब्दसिद्धिं नैरुक्ता मन्यन्ते, द्रष्टृ–दृश्ययोरन्योन्यसाममण्डलभोगादेव दर्शनसंपत्तेर्दृश्योऽपि द्रष्टारं पश्यति साम्येनेति नियमाद् दृष्टिसिद्धस्यास्य द्रष्टृत्वोपपत्या पश्यकत्व-सिद्धिः । यत्तु वैयाकरणा आहुः– पशिरयमादेशो न धातुः । स चापि सार्वधातुकविषयो नार्द्धधातुके प्रयोगमर्हतीति । तत्तुच्छम् । व्याकरणस्य सिद्धशब्दप्रतिपत्तावभ्युपायत्वेऽपि शब्दनिर्मापकत्वाभावात् । शब्दपरतन्त्र हि व्याकरणम्, न त्विमे व्याकरणपरतन्त्राः शब्दाः इष्यन्ते । भाषाव्यवहारो हि व्याकरणे प्रमाणं भवति । तस्मिंश्च प्रमाणे दृष्टे न दृष्यते, लक्षणं चेत् तदकात्स्न्यं व्याकरणस्य मन्यामहे । दृश्यते तु पश्यतेर्धातोरार्द्धधातुकेऽपि क्वाचित्कः प्रयोगः– असूर्य्यं पश्या राजदारा इति । पशुरिति । पश्यक इति । पश्यकं सन्तं कश्यप इत्याचक्षते परोक्षेण । स हि दृश्यकपालस्थो नित्यं सर्वाः प्रजाः पश्यतीत्यत एव श्रूयते– "अच्छिन्नपत्राः प्रजा अनुवीक्षस्वेति" ॥ अथवा दूरस्थस्यापि सतो यदनया प्रजया नित्यं संबन्धस्तत्रेष्यते दृष्टिव्यवहारः । यथाहि— "आदेवो याति भुवनानि पश्यन्"— इति मन्त्रे सूर्य्यस्य द्रष्टृत्वं व्यवह्रियते तद्वत् । तेन दृश्यकपालस्थो द्रष्टा प्राणघनो जायमान प्रजासंबन्धात् कश्यप इति सिद्धम् ॥

(८) नानाजातीयाश्चैते प्राणा भवन्ति । तेष्वयं कश्यपः किं जातीय इत्यत्राह- "यः स कूर्म्मः असौ स आदित्य" इति । यस्य विभक्तयो द्वादशादित्या उच्यन्ते स एषां द्वादशानामेकः प्रजापतिः संवत्सरो नाम प्राण एवादित्यः । स सूर्य्यायतनो विभुः । तत एव संवत्सराददित्यामादित्या उत्पद्यन्ते दित्यां दैत्याः । ते हैते कश्यपस्य पत्न्यावुपचर्य्येते सहधर्म्मित्वात् ॥

# अदितिः सूर्य्यमूला

पृथ्वी
सूर्य्यः
अदितिः
अदितिः
दितिः

(६) तत्र तावदियमदितिश्चतुर्धा व्याख्यायते—सूर्य्यमूला[1], द्रष्टृमूला[2], नक्षत्रमूला[3], आकाशमूला[4], चेति। तद् यथा—समसंमुखयोः पृथ्वी-सूर्य्ययोरनवरोधेन संस्थानम्—अदितिः। अथैतद्विपर्य्यासे सूर्य्यस्य पृथिव्या-ऽवरोधेन संस्थानं दितिः। दो अवखण्डने धातुः। तथा चैतत् सूर्य्याभिमुख्येन सूर्य्यज्योतिषि गच्छतां पृथ्वीस्थानमम्भसामदितिस्थाने देवत्वं प्राप्ताना-मादित्यत्वं नियम्यते। एवमेव सूर्य्यतो विपरीतदिशि पृथिव्यास्तमसि दितिस्थाने गच्छतामम्भसामसुरत्वं प्राप्तानां दैत्यत्वमुपचर्य्यते। अपि च तस्मिन् पृथ्वी-सूर्य्ययोः सांमुख्ये दिवमारभ्य पृथ्वीतलपर्य्यन्तं ये यथाऽर्था अवस्थिता-स्तेषामशेषाणां संमिलितरूपस्येदमदितित्वं विज्ञायते। एतदभिप्रायेणैव मन्त्रश्रुतिः श्रूयते—

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्" इति ( )

अत्र पिता सूर्य्यमूलिका द्यौः पुत्रोऽग्निः।

"द्यौः पितः पृथ्वी मातरध्रुगग्ने भ्रातर्वसवो मृडत नः।
विश्वेदेवा अदिते सजोषा अस्मभ्यं शर्म्म वहुलं वियन्त" ( )

इति मन्त्रान्तरे द्युपुत्रानस्मानपेक्ष्याग्नेर्भ्रातृत्वेनाख्यानात्।
इत्थं चैवंविधेषु मन्त्रेषु सूर्य्यमण्डलोपलक्षितेयमदितिर्दर्शिता ॥ १ ॥

# अदितिर्दृष्टिमूला ।




(१०) अथ द्रष्टृस्थित्युपलक्षितभूमण्डलोपलक्षितामेके तामदितिमाहुः । तेषां मते सर्वत्रैवाण्डकपालस्यार्द्धस्य दृश्यत्वमदितिरर्द्धस्य चान्यस्यादृश्यत्वं दितिः । तेनैतस्याः क्रमेण प्राचीमनुसरन्त्या रात्रावपि सत्तोपपद्यते । उक्तरीत्या सूर्य्यनित्यायाः स्थिरादित्या अभ्युपगमे तु —

"अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवाँ उपप्रैत् सप्तभिः परा मार्तण्डमास्यत् " (            )
सप्तभिः पुत्रैरदितिरुपप्रैत् पूर्व्यं युगम् ।
प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत्" (            )

इति मन्त्रद्वयोक्तयोः सूर्य्यत्यागपुनराहरणयोरसंभवापत्तेः । तथा चैतस्या अदित्याः सर्वां पृथिवीं, सर्वां दिवं, सर्वं चान्तरिक्षं संसर्पन्त्याः सर्वात्मकत्वं संपद्यते । तथा च श्रूयते —

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्" इति ।

"इयं वै पृथिव्यदितिः" (            ) इति च ॥ २ ॥

# अदितिर्नक्षत्रमूला ।




(११) अथान्ये पुनरेकस्मिन् संवत्सरे सूर्य्येण त्रयोदशकृत्वश्चन्द्रमण्डल-संयोगात्तत्संयोगबिन्दुविभक्तासु त्रयोदशसु चन्द्रकक्षाखण्डरूपासु दाक्षायणीषु कश्यपस्त्रीत्वेनाध्यवसितासु नित्यामेव कांचिदचलामदितिमाचक्षते । तदायतनं श्रूयते — " **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्य्यसि** " — इति स्वातीतारकोदये रेवत्यामस्तंगतायामनस्तंगतायां चाश्विनीतारकायां यः खस्वस्तिकबिन्दुश्चन्द्रमार्गस्थः सा हीयमदितिर्नाम । तेन पुनर्वसुनक्षत्रस्य तृतीयचरणमदित्याः स्थानं सुप्रतिपन्नं भवति तस्यैव तदानीं खस्वस्तिक भूतत्वात् । तद्वैपरीत्येन च निचृत्तारासन्नबिन्दोर्दितित्व-मास्थेयम् तस्यैव तदानीमधःस्वस्तिकत्वात् । अन्याश्चैवमेकादशमिता दक्षसंज्ञकचन्द्रमार्गविभक्तयः कश्यपस्य सहयोगिन्यः कल्प्यन्ते, तदन्यत्र निरूपितम् ॥ ३ ॥

# अदितिराकाशमूला ।

(१२) अथवा अश्विनीमारभ्य चित्रान्तमाकाशमण्डलं दैवसंपत्त्याऽन्वितम् । अत्र हि मध्यस्थाया अदित्याः सप्त पुत्रा आदित्या नामोपपद्यन्ते । तेषामदितिपर्य्यन्त उद्ग्राभः । ततः पश्चान्निग्राभः । उद्ग्राभे यज्ञाः प्रवर्तन्ते । अदितिमध्य ह्रीदमाकाशमण्डलमुपलक्षणया अदितिर्विवक्ष्यते । तद्व्यतिरिक्तं तु स्वात्याद्यधरेवत्यन्तमाकाशार्द्धं दित्युपलक्षितमासुरसंपत्त्यान्वितं दितिर्विवक्ष्यते एताभ्यामेव द्वाभ्यां पत्नीभ्यां दित्यदितिभ्यां संयुज्यमानः स सूर्य्यसंवत्सरो नाम सर्वेषां जनयिता प्राणो यया संस्थया सर्वमिदं यथायथं जनयति तादृशसंस्थावच्छिन्नः कश्यप इत्युच्यते—इति सिद्धम् ।

(१३) स एष कश्यपः प्राणो नान्तरेण भूतसंबन्धमनाश्रितः क्वचिदवतिष्ठते इत्यत आह— **"अवका अधस्ताद् भवन्त्यवका उपरिष्टादिति"** । अप्सु ह्येष कश्यपः प्रचरति तस्याधस्तादुपरिष्टाच्चापो भवन्ति । एवमयं प्राणो नित्यमद्भिः सम्पद्यमानः प्रचरति । ताश्चैता आपश्चतुर्विधा ऐतरेयके श्रूयन्ते— **"अम्भो मरीचयो मर आप"** इति । **"अदोऽम्भः परेणदिवं, द्यौः प्रतिष्ठा ॥१॥ अन्तरिक्षं मरीचयः ॥२॥ पृथिवी मरः ॥३॥ या अधस्तात् ता आपः" ॥४॥** इति ।

तत्रैष कश्यपो मरीचिभिः क्लृप्तशरीरो भवति । अत एवैनं मरीचिसुतं मारीचमाहुः पौराणिकाः । मरीचयश्चैताः सवित्राकृष्टाः सूर्य्यरश्मिस्था आपः ।

**"सूर्य्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि" एता वा आपः स्वराजो यन्मरीचयः "** । इत्यादि श्रुतेः ।

ताश्चैता मरीचयो लोकेभ्यस्त्रिभ्यः समाकृष्टैर्दधि – घृत-मधुभिः संश्लिष्य रसमय्यः संपद्यन्ते । या अधस्तादपां ता घनीभूतत्वाद् दधिमय्यः । मध्ये च द्रवाः स्निग्धा घृतमय्यः । अथ या उपरिष्टात्ताविरला—

वयवाः स्वादिष्ठाः मधुमय्यः । एतानेव रसानानवरतं सिञ्चन्नसौ भगवान् कश्यपात्मा प्राणः। सर्वमिदं चराचरमेतैरेव दधि-घृत-मधुभी रसैः कृतशरीरं जनयति। सर्वेषामेव प्राणिनां शरीराणि दध्ना घृतेन मधुना चोत्पद्यन्ते, कठिन प्रायैर्द्रवप्रायैः पवनप्रायैश्चाङ्गैः संपन्नत्वात्, मांसेन श्लेषणीय वसारसेन शर्कराभिः स्पष्टमुपपन्नत्वाच्च। पुनश्चैतानुपाहरन्नात्मसात् कुर्वन् स एतत्रिरसमय-मेव सर्वदा रूपं धत्ते। तदाह— "यावानु वै रसस्तावानात्मा" इति। स यावदस्मिन् दधिरसस्तावानयं लोकः, यावद् घृतरसस्तावदन्तरिक्षम्। यावद्वा तस्मिन् मधुरसस्तावानसौ लोकः। तदाह—"स एए इम एव लोकाः" इति। अत एव त्रयो रसा अद्भ्यः शरीर निर्म्माणे साधन द्रव्यम्। तैरेव रसैः कृतशरीरः सर्वः शरीरेण संयुज्योत्पद्यते इत्यत आह—"सर्वाः प्रजाः काश्यप्य" इति। कश्यपेनोत्पादिते वसिष्ठादिभिर्विशेषा आधीयन्ते। स एष कश्यपो जनकः सर्वेषां देवमनुष्याणां तिरश्चां च भूतानाम्। तदित्थमयं सर्वजनको रसत्रयात्मा मारीचोऽर्द्ध मण्डलाकारः संवत्सर प्राणघनः कश्यप इति निष्कर्षः। तमेतं कूर्म्मं कश्यपं पश्यन् ऋषिरभ्यनूवाच—

"अपां गम्भन्त्सीद, मा त्वा सूर्य्योऽभि ताप्सीन्माग्निर्वैश्वानरः।
अच्छिन्नपत्राः प्रजा अनुवीक्षस्व,अनुत्वा दिव्या वृष्टिः सचताम्" ॥
"त्रीन् समुद्रान् समसृपत् स्वर्गानपां पतिर्वृषभ इष्टकानाम्।
पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परे ताः" ॥२॥

"एतद्ध्यपां गम्भिष्ठं यत्रैष एतत्तपति। इमा वै सर्वाः प्रजास्ता-अरिष्टा अनार्त्ता अनुवीक्षस्व। इमे वै त्रयः समुद्राः स्वर्गालोकाः। तानेष कूर्म्मो भूत्वाऽनुसंससर्प। पशवो वै पुरीषम्। पशून् वसानः"— इति हि तद् ब्राह्मणं भवति एष खलु कश्यपप्राणः पश्यकोऽस्तीति रसत्रय-दृष्ट्याऽनवरतं सर्वाः प्रजा अनुवीक्षते। इत्येकमस्य व्रतं भवति ॥१॥

अपिच "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपाः। तथाऽक्षराद् विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापि यन्ति"॥

इति श्रुतेरपरिमितादक्षरतो योगमायापरिमितोऽक्षरभावः प्रजायते । स वाङ्मयः । मनोमयप्राणगर्भितायां वाचोविश्वव्यापित्वाद्ब्रह्मरूपत्वेपि योगमायावच्छेदात् सत्यरूपेणोत्पत्तौ तद्धृदये ब्रह्मप्रजापतेः प्राणोस्य संवर्षाद् वाचोविकारेणापामुत्पत्तिः । तासां पुनरन्तरान्तरतो घनीभावक्रमेण त्रयः समुद्राः समपद्यन्त आपो वायुः सोम इति । एष च सोमो घनीभूतप्राणसंघर्षेण प्रज्वलन्नपां हृदयेऽग्निः प्रादुर्भवति सोऽग्निसाहस्री सूर्य्यो भवति । तस्यैतस्य सूर्यस्य षट्पर्वा संस्था समपद्यत । सर्वान्तरतो हिरण्मयप्राणघनो बिम्बः । तद्बहिः परितो ज्योतिःसंस्था । तद्बहिः परितः सोमेन वायुना अद्भिश्चोपपन्ना समुद्रत्रयसंस्था । तद्बहिर्वाचःसंस्थेति । तत्रैतांस्त्रीन् समुद्रानेष कश्यपप्राणोऽनुसंससर्प । इतिद्वितीयमस्य व्रतंभवति ॥ २ ॥

अथ सूर्य्यादिप्राणमलभूतैः पशुभिरयं पर्य्यावृतो भवतीति तृतीयमस्यं व्रतं भवति ॥ ३ ॥

स इत्थमय कूर्म्मप्राणोऽन्तरिक्षद्यवि सूर्य्यद्यवि सोमद्यवि च संनिविष्टो व्याख्यातः ।

अपिच—**कश्यपस्य स्वर्विदो यावाहुः स युजाविति । ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य"** इति मन्त्रवर्णः श्रूयते । तत्र द्यावा पृथिव्योर्वा मित्रावरुणयोर्वा सयुक्त्वं द्रष्टव्यम् । ज्योतिर्विदां समये तूत्तरा स्वर्गमण्डले भवत्येका काश्यपतारा द्वाभ्यां ताराभ्यां संयुक्ता । **"अग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थम्"** इति श्रुतावपि कश्यपस्यैव प्रजापतिशब्देनाभिधानमिति दिक् ।

## कश्यपो नामान्यो वेदमन्त्रकृन्मनुष्य ऋषिः !

( १४ ) तदित्थमेतत्कश्यपप्राण द्रष्टरि कस्मिंश्चिद्विदुषि कश्यपशब्दो भक्त्या प्रयुज्यते । तदिदमेतस्य विदुषः कश्यपप्राणद्रष्टृत्वनिबन्धनं यशोनामा वगन्तव्यम् । स चायं मनुष्यविधः कश्यपो महर्षिः स्वर्गलोकस्थ एवासीत् । **"कश्यपस्य स्वर्विदो या वाहुः सयुजावितीति"** मन्त्रश्रुत्या तथावगतेः ।

स्वर्गप्रदेश च तस्याश्रमो ब्रह्मपरिषत्स्थानं वा कुत्रासीदिति विशिष्य न श्रूयते। पौराणिकास्तु— पामीरनाम्नः प्रागमेरोः पूर्वेण विकङ्कमणिशैलयोः पर्वतयो-रन्तरद्रोण्यां चम्पकवनं प्रागासीत्। तत्रैतस्य कश्यपस्य प्रजापतेराश्रमो ब्रह्मपरिषद्वा बभूवेत्याहुः। तथा च वायुपुराणम् —

"विकङ्कस्याचलेन्द्रस्य मणिशैलस्य चान्तरे।
विपुलं चम्पकवनं सिद्धचारण सेवितम् ॥१॥
तत्राश्रमं भगवतः कश्यपस्य प्रजापतेः।
सिद्ध साध्यगणाकीर्णं नानाश्रुति विभूषितम्" ॥२॥ इति (पु.अ.३७)

---

# काश्यपी मन्त्रसंहिता।

(१५) तत्र निवसता भगवता कश्यपेन प्रणीतैका मन्त्रसंहिता दृश्यते। तस्यां च कश्यपसंहितायां कश्यप एकः, कश्यपपुत्रा अष्टौ, योषितौ द्वे इत्येवमेकादशर्षयो भवन्ति। तत्र तावदयं कश्यपो मारीचः एकोत्तरर्चेन सूक्तसहस्रेण वा त्रिष्टुभैकया वा जातवेदसं नामाग्निं ततोऽपरैर्बहुभिः सूक्तै-रिन्द्रं च तुष्टाव। "द्व्याद्या सहस्रचान्तं सूक्तं नानाविधं भवेत्। नव नवतिः पञ्चलला ऋचः स्युः स चतुः शतम्"। जातवेदस्यं सूक्तसहस्रमेके ऐन्द्रात्पूर्वं कश्यपार्षं वदन्ति। जातवेदसे सूक्तमाद्यन्तु तेषामेकभूयस्त्वं मन्यते शाकपूणिः" । इति बृहद्देवतायां शौनकोक्तेः(५००४६६) दशभिर्विश्वान्देवान् एकपञ्चाशता पवमानं तुष्टावेति द्वापष्टिमन्त्रंकश्यपार्षं प्रथमं पर्व ॥६२॥ अथासितदेवलौ काश्यपावेकादशभिराप्रियमग्निं, द्वापञ्चाशेन शतेन पवमानं तुष्टुवतुः। त्रिषष्ट्यधिकशतमसितदेवलार्षम् ॥१६३॥ अवत्सारः काश्यपः पञ्चदशभिर्विश्वान्देवान्, । द्वात्रिंशता पवमानमिति सप्तचत्वारिंशता वत्सारार्षम् ॥४७॥ निध्रुविस्त्रिंशता पवमानं रेभः पञ्च-सूनदशभिरिन्द्रं, रेभ काश्यपो सप्तदशभिः पवमानं, विवृहापड्भिर्यक्ष्मघ्नं

भूतांश एकादशभिः रश्विनौ, द्वे शिखण्डिन्यौ, काश्यप्यावप्सरसौ षड्भिः पवमानं तुष्टावेति ( ८५ ) पञ्चनवत्यधिकशतद्वयेनोत्तर कश्यपार्षं द्वितीयंपर्व ।। २६५ ।। तदित्थं सप्तपञ्चाशानित्रीणि शतानि काश्यपी संहिता पूर्णा। (३५७)

( १६ ) स एष वेदग्रन्थः स्वर्ग्यः स्वर्गागतो द्रष्टव्यः । तन्निर्म्मातुः कश्यपस्य महर्षेः स्वर्गनिवासित्वाद्, अत्रवर्णनीयानां मनुष्यदेवानां भौमस्वर्ग–वासित्वात्, प्राणदेवानां सूर्य्यस्वर्गवासित्वाच्च । यद्यपि कश्यपस्यारिष्टनेमिरिति नामान्तरं पौराणिकै स्मर्य्यते किन्तु कश्यपाऽरिष्टनेमिरित्येतौ पर्य्यायवाचिनौ न। स्थेयौ । अरिष्टनेमेर्यदृच्छाशब्दत्वात् । कश्यपशब्दस्तु गोत्रनिबन्धनो जातिशब्दः । त्रयोदशकश्यपाबभूवुः तेषामेकः कश्चित् अरिष्टनेमिःस्यात । प्रकृते तु नायमरिष्टनेमिकश्यपः षष्टिमितासु दक्षकन्यासु त्रयोदशानां कश्यपाय, चतसृणांत्वरिष्टनेमिने पार्थक्येनप्रदानाख्यानात् । तस्यादयमज्ञातनामाकश्चित् कश्यपो ध्येयः ।।इति।।

**सोऽयमैतिहासिको वैज्ञानिकश्च द्विविधोऽपिकश्यपो व्याख्यातः ।।**

।। इति कश्यपः ।।



अनेन सरस्वतीनद्याः उभयपार्श्वयोः संनिविष्ठा काचिदयःप्राकारोपेता सरस्वतीनाम्नी नगरी लक्ष्यते । तन्नगर्य्या मध्यतो रथ्येवेय सरस्वती प्रवहतिस्म । तत्कूलोपाश्रये च वसिष्ठस्य गृहं तत्रासात् । स च वसिष्ठस्तत्रासन्ने प्रतिष्ठान-पुरनिवसतो नाहुषस्य महाराजस्याय पुरोधा यज्ञकर्तासीत् । अत एव स नहुषं बाल्ये प्रतिपालयन् नाहुषराजत्वकालपर्य्यन्तं जीवित आसीत् । तेनैवेयं मन्त्र-संहिता प्रणीतेत्यतो नाहुषकाल एवास्य वसिष्ठस्य जीवनकाल इत्येतदर्थजातं विज्ञातं भवति । अधिकं चात्र भारतख्यातौ द्रष्टव्यम् ॥ ४ ॥

## जन्म–निरूपणम् ।

एष चादिवसिष्ठः कस्य पुत्र आसीदिति नावधार्यते । यत्वयमादिब्रह्मणः पुत्र आसीदिति पौराणिका आहुः । तन्न । ब्रह्मणो मानसपुत्रत्वेन वसिष्ठ-स्मरणात् । तावता औरस पुत्रत्वाप्रतिपत्तेः । अन्यौरसानामेव हि ब्रह्मणा पुत्रत्वेन प्रतिगृहीतानां मनसा पुत्रत्वेन भावितानां मानस पुत्रत्वमिष्यते । तस्मादस्य ब्रह्मगृहीतमानसपुत्रत्वे स्थितेऽपि ब्रह्मौरसपुत्रत्वं नाध्यवसातुं शक्यम् । ब्रह्मौरसपुत्रत्वेनाथर्वोङ्कारादिवदस्य वसिष्ठस्य विशिष्याश्रूयमाणत्वात् । परे तु वसिष्ठमगस्त्यागस्त्यानां मित्रावरुणाभ्यां देवाभ्यां गन्धर्विण्यामुर्वश्या-मुत्पादितत्वात् मैत्रावरुणित्वं वेश्यापुत्रत्वं चा चक्षते । तथाहि–

" विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार ॥" (ऋ. ७/३३/१०
सत्रे ह जाता विषिता नमोभिः कुम्भेः रेतः सिषिचतुः समानम् ।
ततो ह मान उदियाय मध्यात् ततो जातमृषिमाहुर्वसिष्ठम् ॥ (ऋ. ७/३३/१३)

इतिश्रवणात्

विद्युज्ज्योतिः परित्यजन्तं वसिष्ठं यदागस्त्यः स्वसंनिवेशायाजहार तदा-ऽगस्त्येन सहैवायं प्रजापतिपुत्रो वसिष्ठः पूर्वशरीरं परित्यज्योर्वश्यां जज्ञे ।

# आश्रमनिरूपणम् ।

अनेन सरस्वतीनद्याः उभयपार्श्वयोः संनिविष्टा काचिदयः प्राकारोपेता सरस्वती नाम्नी नगरीलक्ष्यते । तन्नगर्य्या मध्यतो रथ्ये वेयं सरस्वती प्रवहतिस्म । तत्कूलोपाश्रये च वसिष्ठस्य गृहं तत्रासीत ।

आश्रम :—



१ ८ ७ ६ ४ २ ५ ९

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजातः ।

१२ ११ १० ३ १५ १६ १४ १३ १७

द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाऽददन्त "

( ऋ ७/३३/११ )

" अप्सरसः परिजज्ञे वसिष्ठः । " ( ऋ/७/३३/१२ )

इति मन्त्रश्रवणादादिब्रह्मणो जन्मस्थाने पुष्करे दैव्येन ब्रह्मणा संपन्नस्योर्वश्यां स्कन्नस्य मित्रावरुणोभयरेतोद्रप्सस्योत्पन्नं पुरुषं वसिष्ठत्वेन सर्वे देवा अगृह्णन्निति स्वयं वसिष्ठेन वसिष्ठपुत्रेण वेन्द्रेण वोक्तत्वात् तथावगच्छन्ति । स्मरन्ति च शौनकादयः —

"तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ॥ १ ॥
तेनैव तु मुहूर्तेन वीर्य्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ॥ २ ॥
बहुधा पतितं रेतः कलशे च जले स्थले ।
स्थले वसिष्ठस्तु मुनिः संभूत ऋषिसत्तमः ॥ ३ ॥
कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः ।
उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः ॥ ४ ॥
मानेन संमितो यस्मात्तस्मान्मान्य इहोच्यते ।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ॥ ५ ॥
कुम्भ इत्यभिधानं च परिमाणं च लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ।
सर्वतः पुष्करे तं हि विश्वेदेवा अधारयन् ॥ ६ ॥ " इति ।

तस्मादमोघवीर्य्ययो र्मित्रावरुणयो र्देवयोरादित्यसत्रे समागतयोरुर्वशीं प्रति दृष्टिपातात् सहैव रेतः स्कन्दनात् तस्य च रेतसो यज्ञियकुम्भे वासतीवरे त्रेधा निपतनात् त्रयस्ते पुरुषात्र्जायन्तेति मैत्रावरुणित्वमेषामुपपद्यते । उर्वश्याश्च कामासक्तायास्तत्र रेतसि मनोयोगादेषामुर्वशीपुत्रत्वमित्याहुः । तदेतदप्य वैज्ञानिकम् । चतुष्टयी तावदस्यर्षि शब्दस्य प्रवृत्तिः असल्लक्षण[1] रोचना[2] लक्षणा द्रष्टृत्वलक्षणा[3] वक्तृत्वलक्षणा[4]चेति ।

१– असल्लक्षणं तावत् प्राणानामृषित्वमाहुः—

असद्वा इदमग्र आसीत् किं तदसदासीदिति ।

ऋषयो वा व तेऽग्रेऽसदासीत् । के ते ऋषयः इति प्राणा वा ऋषयः " इति श्रुतेः ।

" साकं जानां सप्तथमाहुरेकजं षडिद् यमा ऋषयो देवजा इति ।
तेषा मिष्टानी विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः। ।"

( ऋ १/१६४/१५ ) इतिमन्त्रवर्णाच्च ।।

प्राणो वै वसिष्ठ ऋषिः, यद्वै नु श्रेष्ठस्तेन वसिष्ठः ।
अथो यद्वस्तृतमो वसति तेनो एव वसिष्ठः ।। १ ।।

मनो वै भरद्वाज ऋषिः अन्नं वाजः । यो वै मनो बिभर्ति सोऽन्नं वाजं भरति । तस्मान्मनोभरद्वाज ऋषिः ।। २ ।।

चक्षुर्वैजमदग्नि ऋषिः । यदनेनजगत्पश्यति अथो मनुते तस्याच्चक्षु र्जमदग्नि ऋषिः ।। ३ ।।

श्रोत्रंवैविश्वामित्र ऋषिः । यदेनेन सर्वतः शृणोति, अथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्रऋषिः ।। ४ ।।

वाग् वै विश्वकर्मऋषिः । वाचा हीदं सर्वं कृतं तस्माद्वाग् विश्वकर्म ऋषिः । इत्यादिवचनश्रवणाच्च ।

२- अपिच रोचना लक्षणं ताराणामृषित्वमाहुः । तथा च श्रूयते—

" सप्तर्षींनु ह स्म वै पुरर्क्षा इत्याचक्षते ।

अमी ह्युत्तरा हि सप्तर्षय उद्यन्ति " इति ।

यत्रा सप्त ऋषीन् पर एकमाहुः, इत्यादि ।

अत्रोत्तरस्यां दिशि व्योम्नि ध्रुवतारासंनिधाने दृश्यमानानां स्थूलानां सप्ततारााणामेव मरीच्यादिसप्तर्षित्वेन विवक्षा दृश्यते । तत्र चत्वारश्चतुरस्रक्षेत्र कोणस्थाः, ततोऽन्ये त्रयः पूर्वतो निविष्टाः । तेषु त्रिषु यः सर्वतः प्राच्यां दृश्यते स मरीचिः यः पश्चिमश्चतुरस्रसंनिहितः सोऽङ्गिराः । तयोर्मध्यगतो वसिष्ठोऽरुन्धतीसहितः, चतुरस्रे पुत्रङ्गिरसः संनिधावत्रिः । ततोऽन्ये पुलस्त्य-पुलह-क्रतवः इति पौराणिका आहुः । तदनुसारेण ज्योतिर्विदोऽप्याहुः । यथा बृहत्संहितायाम्—

पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।

तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥ १ ॥

पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः ।

तत्र वसिष्ठं मुनिवरमुपाश्रिताऽरुन्धती साध्वी ॥ २ ॥ ( अ. १३ )

एवमन्येऽप्युत्तरस्यां दिशि मार्कण्डेयकश्यपादयो मध्याकाशे बृहस्पति मत्स्यादयोऽवाच्यामगस्त्यादयस्ताराविशेषा ऋषित्वेनेष्यन्ते ।

३- अपिच द्रष्टृत्वलक्षणं मन्त्रकृतां मन्त्रविदां मन्त्रपतीनामनूचानानां मनुष्याणामृषित्वमाहुः ।

यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण ।

तां देवीं वाचं हविषा यजामहे सा नो दधातु सुकृतस्य लोके । इति ।

नमोऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः । इति ।

मा मामृषयो मन्त्रकृतो मन्त्रविदः प्रादुर्दैवीं वाचम् " इत्यादि श्रवणात् ।

" यो वै ज्ञातोऽनूचानः स ऋषिः " इति शतपथब्राह्मणश्रवणाच्च ।
" ऋषयो मन्त्रद्रष्टारः साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः " इति निरुक्तस्मरणाच्च । " अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भु अभ्यानर्षत् । तदृषीणामृषित्वमिति " यज्ञेन वाचः यदवीयमायंस्तामन्वविन्दनृषिषु प्रविष्टाम् । " इति । तद्वा ऋषयः प्रतिबुबुधिरे य उ तर्हि ऋषय आसुः—" इति । अग्निः पूर्वेभि ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति " इत्यादि श्रुतिनिदर्शनेषु प्रयुक्त ऋषिशब्दः साक्षात्कृतधर्मसु प्राणानां विद्वत्सु मनुष्यविशेषेष्वेव प्रवर्तते ॥३॥

४– अपि चान्यन्मान्त्रवर्णिकमृषित्वं वाक्यसापेक्षम् । यस्य वाक्यम् स ऋषिः, या वाक्यनोच्यते सा देवतेति परिभाषितत्वात् । मन्त्रो हि वाक्यं, वाक्यसमुदायो वा । स येनायं मन्त्रोऽर्थं दृष्ट्वोपदिष्टः सोऽस्य मन्त्रस्य ऋषिरुच्यते । ऋषिभिरेवैते मन्त्राः पुरोपदिष्टाः । तस्मात् पारोवर्य्यविदोऽमी ऋषय एवैतेषां मन्त्राणां वक्तार ऋषयः प्रायेण दृश्यन्ते । क्वचित्वनृषयोऽपि वक्तृत्वेन विवक्षणादेषामृषयो निर्दिश्यन्ते । तत्रेदं वक्तृत्वलक्षणं गौणमृषित्वं द्रष्टव्यम । तथाहि पञ्चविधो मन्त्राणां वर्गोभवति–भाववृत्तं[1], देवस्तवः[2], वक्त्रात्मस्तवो[3],देवात्मस्तवः[4],कपोश्चित्संवादो[5] वेति । सृष्टिक्रमनिरूपणं भाववृत्तम् । प्राणदेवानां स्वरूपधर्मप्रदर्शनं देवस्तवः । तयोरयं मन्त्रप्रणेतैव ऋषिः, द्रष्टृत्वाच्च वक्तृत्वाच्च । देवता तु तत्र सृष्टिविषयो वा प्राणदेवा वा । अथ वक्त्रात्मस्तवेऽपि अयं मन्त्रप्रणेता आत्मानं स्तौतीति स एव स्यादृषिश्च देवता च । अथ चतुर्थे देवात्मस्तवे तु मन्त्रप्रणेता प्रतिपाद्यं देवं तद्देवमुखेनैव स्तावयति । तत्र तस्य प्राणदेवस्यैव वक्तृत्वेन विवक्षणात् स एव ऋषिः स्याद्देवता च । मन्त्रप्रणेतुस्तु वक्तृत्वेऽपि तत्र ऋषित्वमपह्नूयते । अथ पञ्चमे संवादेऽपि मन्त्रप्रणेतु ऋर्षित्वमपह्नूयते । ययोस्तु संवादो वर्ण्यते तयोर्मध्येवक्तु ऋर्षित्वं सेबोध्यस्य देवतात्वमिति पर्य्यायेणोभयोर्ऋषित्वं देवतात्वं च विवक्ष्यत इति

बृहद्देवतायां भगवता शौनकेन सुविशदं व्याख्यातम्। एषामुदाहरणानि तु विस्तरभयान्नेहोपन्यस्यन्ते। ऋग्वेदादिमन्त्रसंहिताचतुष्टये तु य इमे मन्त्राणाम ऋषयः केचन स्मर्यन्ते तत्रैतत्पञ्चमं वक्तृत्वलक्षणमेव ऋषित्वं द्रष्टव्यम्।

तदित्थं लक्षणभेदादृषयश्चतुर्धा भिद्यन्ते, तेषां च जन्मकर्मस्वरूपाख्यानादयो विषया अपि प्रातिस्विकतया भिद्यन्ते नान्यधर्मा अन्यत्रोपपद्यन्ते, तथापि नामसामान्यादन्यत्राप्यन्यधर्माः सांकर्य्येण प्रतिधीयन्ते। यथाऽनेकवर्ष सहस्रजीवित्वं प्राणलक्षणेषूपपन्नमपि नियतपुरुषायुषेषु शतायुषु मनुष्येषु नोपपद्यते। एवमेवेदं मैत्रावरुणित्वमुर्वशीजन्यत्वं च रोचनालक्षणेषु मत्स्य वसिष्ठागस्त्येष्वेवोपपन्नमपि मन्त्रद्रष्टृषु पारोवर्य्यवित्सु पुरुषेषु नोपपद्यते। अतएवायं वसिष्ठो मनुष्यविधो विद्वान् तारालक्षणं तदुपलब्धप्राणलक्षणं वा वसिष्ठं संबोध्य "**उतासि मैत्रावरुणो वसिष्ठोर्वश्या**" इति मन्त्र प्रयुङ्क्ते। नतु मनुष्यविधमात्मानमेव तथासंबोधयितुं युज्यते। "**अहर्वै मित्रं रात्रिर्वरुण**" इति श्रुतेः। पूर्व कपालस्थादित्यस्य संस्रवशीलत्वान्मित्रत्वं पश्चिमकपालस्थादित्यस्य तु विशरणशीलतया तमसा व्रियमाणत्वाद्वरुणत्त्वम्। तयोश्चावच्छेदकस्य मध्यमस्य याम्योत्तरवृत्तस्य दिकृत्वादप्सरस्त्वमुभयत एवोर्वन्तरिक्षे समानव्याप्तिमत्वादुर्वशीत्वम्। तस्यां मध्यमरेखायां तयोः समुद्ररूपेऽन्तरिक्षे कुम्भराशौ परिप्लवमानयो रेतः सेक मित्र वरुणोभयधर्म्माणस्त्रयस्तारापुरुषा उत्पद्यन्ते उत्तरतो वसिष्ठो दक्षिणतोऽगस्त्यः कुम्भमध्ये तु मत्स्य इति। पुरायुगे कुम्भेन धान्यानि मीयन्ते स्मेति कुम्भस्य मानत्वं तत्रोत्पन्नत्वादेषां त्रयाणां मान्यत्वं चाहुः न त्वेवमेक कुम्भजन्यत्वं मनुष्याणां वसिष्ठागस्त्य मत्स्यानां संभाव्यते। वसिष्ठे नैवसप्तमस्य त्रयस्त्रिंशसूक्ते पञ्चभिऋर्ग्भिर्मित्रावरुणाभ्यामुर्वश्यां माने कुम्भे रेतःसेकाख्यानात् तदाख्यानस्य स्वविषकत्वासामञ्जस्यात् तदन्यविषयकत्वोपपत्तेः। तस्मात् तारारूपाणां वसिष्ठादीनामेवेदं तारा विज्ञानोपयोग्याख्यान विशेषसिद्धं मैत्रावरुणित्वमुर्वशीजन्यत्वं मान्यत्वं-वा न तु ब्रह्मणो मानसपुत्राणां मनुष्यविधानाम्। ताराविषयिणी सर्वापीयमाख्यायिका ताराविज्ञानोपयोगिनी बालकोधनार्थाबहुलपसारा सिध्यैव कल्पिता पूर्वैरिति नैतावता मनुष्यविधर्षिषु तदाक्षेपः शक्यः कर्तुम्। यत्तु ब्रह्मणो मानस पुत्रस्य वसिष्ठस्य गोतमहोतृके यज्ञे निमिशापादग्धशरीरतया पुनरुर्वश्यां

द्वितीयं जन्मेत्याचक्षते पौराणिकाः । तदपि नामसामान्यादुपसंक्रमितस्य मैत्रावरुणित्वादिधर्मस्योपपादनार्थं कल्पनामात्रं स्यात् । द्वितीयजन्मनि वेश्या-पुत्रत्वे कथंचिदभ्युपगम्यमानेऽपि वेदमन्त्रद्रष्टुः प्रथमजन्मनो ब्रह्ममानसपुत्रस्य जन्मदाता मुख्यःपिता कश्चिदन्य एव स्यात स नाद्यापि निर्धारितो विज्ञायते इति विरम्यते ।

## मनुष्यवसिष्ठस्य भौमस्वर्गसंचारित्वम् ।

४- स्वर्गे सहस्रद्वारं वरुणगृहं गतोऽयं वसिष्ठो वरुणं स्तुवन्नात्मानं मनुष्यत्वेन प्रतिजानीते -

**यत्किञ्चेदं वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।**
**अचित्तीयत्तव धर्म्मा युयोपिम मानस्तस्मादेनसो देव रीरिषः ।**

इति ( ऋ ७/८९/५ )

एतेन भारतवर्षनिवासिनस्तस्य वरुणदेवकृपया स्वर्गे गमनागमनसंस्रवो विज्ञायते ।

## मन्त्रद्रष्टृत्वस्य पर्षद्ब्रह्मत्वस्य तपस्वित्वस्य राजपुरोधस्त्वस्य चान्यान्य वसिष्ठवृत्तित्वम् ।

५- वसिष्ठवंशधरा अपि सर्वे वसिष्ठा उच्यन्ते -

**" आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यात निर्ग्राह्या गोत्रं च चरणैः सह । "**

इति वैयाकरणैः सिद्धान्तितत्वाद् वसिष्ठादिगोत्रशब्दानां जातिवाचित्वात् । यथा गवां वंशधराः सर्वे गाव एव स्युरेवं वसिष्ठवंशधराः सर्वे वसिष्ठा एव स्युः । तत्र नायं वसिष्ठशब्दस्तत्प्राग्द्रष्टृव्यक्तिमात्रे तत्पुत्रपरम्परायामेव वा रूढः, किन्तु वासिष्ठ्यां ब्रह्मपर्षदि यः कश्चित पुत्रो वा शिष्यो वा पर्षदध्यक्षो ब्रह्मासीत स सर्वो वसिष्ठ इत्युच्यते । वसिष्ठस्य ब्रह्मत्वेन स्मरणात् पर्षदधिष्ठा-तुरेव च ब्रह्मत्वात् वसिष्ठानामानन्त्याचान्येऽन्ये वसिष्ठा अर्बुदाचलेऽयोध्यायां वा ऽन्यत्राख्याने वा संभाव्यन्ते न त्वेतेषामर्वाचां वेदमन्त्रद्रष्टृत्वं कल्प्यम् ।

अयोध्याराजपुरोहितनानावसिष्ठापेक्षया बहुपुरातनस्य कस्यचिन्मूलपुरुष वसिष्ठस्य वेदमन्त्रद्रष्टृत्वेनाभ्युपगम्यमानत्वात।

६– सोऽयमेको मूलपुरुषरूपो वसिष्ठो द्वादशैतस्य पुत्राश्चत्वारस्तत्पौत्रा इत्येवंसप्तदश पुरुषा वसिष्ठसंहितायां मन्त्रद्रष्टारः स्मर्य्यन्ते। एतद्व्यतिरिक्ता स्तद्गोत्रे मन्त्रद्रष्टारो न सन्ति तेषांनामानि यथा –

( १ ) वसिष्ठो ब्रह्मणः पुत्रः ( ८६५ मन्त्राः )

(२) वसिष्ठपुत्राः–

| | | | |
|---|---|---|---|
| १. | मन्युः | ७. | इन्द्रप्रमतिः |
| २. | उपमन्युः | ८. | द्युम्नीकः |
| ३. | व्याघ्रपात् | ९. | चित्रमहाः |
| ४. | मृडीकः | १०. | कर्णश्रुत् |
| ५. | वृषगणः | ११. | वसुक्रः |
| ६. | प्रथः | १२. | शक्तिः |

इत्येते द्वादश वसिष्ठपुत्राः।

---

(३) वसिष्ठपौत्राः —

| | | | |
|---|---|---|---|
| १. | वसुकृद वासुक्रः | ३. | पराशरः शाक्त्यः |
| २. | वसुकर्णो वासुक्रः | ४. | गौरिवीतिः शाक्त्यः |

इत्येते चत्वारः पौत्राः।

७– तत्र वसिष्ठोऽग्निं पञ्चविंशत्या, आप्रमग्निमेकादशभिः, पावकं शुचिं चाग्निं दशभिः, शुक्रं यविष्ठमग्निं दशभिः, वैश्वानरमग्निं षोडशभिः, नानागुणमग्निं त्रिसप्तत्या तुष्टावेति पञ्चचत्यरिंश शतम् १४५ आग्नेयं प्रथमं पर्व। वसिष्ठ एव त्रिचत्वारिंशेन शतेनेन्द्रं नवभिर्वसिष्ठवश्यान् संम्बोध्यैतमिन्द्रं, पञ्चभिर्वसिष्ठागस्त्ययोरुर्वश्यां मित्रावरुणाभ्यां जन्माख्यानं, चतुर्भिः सुदासः पैजवनस्य दानं तुष्टावेत्येकषष्ठं शतम् (१६१) ऐन्द्रं द्वितीयं पर्व। पार्थिवं वैश्वदेव्यं मेकेन सूक्तेन पञ्चविंशत्यामन्त्रैःदिव्यंवैश्वदेव्यं षड्भिः

सूक्तैश्चतुःपञ्चाशता मन्त्रैः आन्तरीदयं वैश्वदेव्यं पञ्चदशभिः सूक्तैरष्टषष्ठ्या मन्त्रैः, चतुर्थलोकीयं वैश्वदेवमूनपञ्चाशत्सूक्तैर्नवाशीत्यधिक त्रिशंत्या मन्त्रैस्तुष्टावेति षट्त्रिंशानि पञ्चशतानि (५३६) वैश्वदेव्यं तृतीयं पर्व। त्रिभिः सूक्तैस्त्रयोविंशत्या (२३) मन्त्रैः पावमान्यं चतुर्थं पर्व। इति चतुर्भिः पर्वभिर्वसिष्ठार्षेयं वृत्तम्। " यूयं पात स्वस्तिभिः सदानः " इति वसिष्ठ काव्याभिज्ञानं ध्रुवकपदम्।

(८) अथेन्द्रप्रमतिर्वृषगणो,मन्युः,उपमन्युः,व्याघ्रपात्,कर्णश्रुद्वसुक्रो मृडीकः शक्तिरित्येते वासिष्ठास्त्रिभिस्त्रिभिः शक्तिश्चतुर्भिश्चान्यैर्मन्त्रैः पवमानं तुष्टाव। मृडीक पञ्चभिश्चित्रमहा, अष्टभिरग्निं, द्युम्नीकः षड्भिरश्विनौ, अथ एकेन विश्वान् देवांस्तुष्टाव (५१) अथ पराशरः शाक्त्यश्चतुर्दशभिः, गौरिवीतिः शाक्त्यो द्वाभ्यां पवमानं, गौरिवीतिरेकादशभिः षड्भिश्चेन्द्रं तुष्टाव (३३) इति चतुरशीतिमन्त्रैरुत्तरवासिष्ठं पञ्चमं पर्व(५) तदित्थं पञ्चषष्ठान्यष्टशतानि मन्त्राणा मयं वसिष्ठः स्वयं, एकपञ्चाशन्मन्त्रान् वसिष्ठपुत्राः, त्रयस्त्रिंशन्मन्त्रानवसिष्ठ पौत्राः ददृशुः– इत्यून पञ्चाशदधिकैर्नवभिः शतै वासिष्ठी संहिता पूर्णा। (९४९)

(९) यद्यप्ययं मान्यो वसिष्ठो मनुष्यलोकस्थो न स्वर्ग्यः भारतवर्षे मनुष्यलोके सिन्धुनदप्रान्ते सरस्वतीनदीसङ्गमस्थाने सरस्वतीग्रामे वसिष्ठाभि जनस्य व्याख्यातत्वात्। तथा प्युत्तरकालमिन्द्रानुग्रहवशात् तस्य स्वर्गे निवासः समपद्यतेति श्रूयते वाजिश्रुतौ तद्यथा —

" वसिष्ठो ह विराजं विदांचकार। तां हेन्द्रोऽभिदध्यौ। स होवाच ऋषे। विराजं ह वै वेत्थ। तां मे ब्रूहीति। स होवाच-किं मम ततः स्यादिति। सर्वस्य च ते यज्ञस्य प्रायश्चित्तिं, ब्रूयां, रूपं च त्वा दर्शयेयेति। स होवाच—यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिं ब्रूथाः- किमु स स्याद् यं त्वं रूपंदर्शयेथा इति। जीवस्वर्ग एवास्माल्लोकात् प्रेयादिति। ततो है ता मृषिरिन्द्राय विराजमुवाच—" इयं वै विराडिति "। तस्माद् योऽस्यै भूयिष्ठं लभते स एव श्रेष्ठो भवति। अथ हैतामिन्द्र ऋषये प्रायश्चित्तिमुवाच— अग्निहोत्रादग्रे— आ महत उक्थात्। ता

ह स्मैताः पुरा व्याहृतीर्वसिष्ठा एव विदुः। तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति। यतस्त्वेना अप्येतर्हि य एव कश्चाधीते—ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति। स ह वै ब्रह्मा भवितुमर्हति। स वा ब्रह्मन्नित्या मन्त्रितः प्रतिशृणुयाद्-य एवमेता व्याहृतीर्वेद " इति। शत. १२/कां/३ प्र. / १ ब्रा.) इति।

तथा चैतस्य वसिष्ठस्योत्तरकालं जीवस्वर्ग वासितया तादृशवसिष्ठ-प्रणीतोऽयं वेदसंहिताग्रन्थः स्वर्ग्य एवाभिज्ञायते। तद्वर्णितानां देवानां भौमस्वर्ग वासितया सूर्य्यप्राणतया च स्वर्ग्यार्थविषयकत्वात्॥

सोऽयमैतिहासिको वैज्ञानिकश्च द्विविधोऽपि वसिष्ठो व्याख्यातः॥

॥ इति वसिष्ठः॥



# अगस्त्यः

वासिष्ठ्यां वसिष्ठानास्त्यमत्स्या रोचनालक्षणा व्याख्याताः इह पुनः प्राणलक्षणानेतान् व्याख्यास्यामः ।

"मित्रः संसृज्य पृथिवीं भूमिं च ज्योतिषा सह" इति श्रुतेः पृथिव्यां ज्योतिः संसर्जनाः सूर्य्यरश्मयो मित्रः ।

"वि यो जघान शमितेव चर्मोपतस्तिरे पृथिवीं सूर्याय" इति मन्त्रश्रुतेः पृथिवीपृष्ठात् ज्योतिरपसारयन्तः सूर्यरश्मयो वरुणः । "अहर्वै मित्रं रात्रिर्वरुणः" इति ब्राह्मणश्रुतेरप्यत्रैव तात्पर्य्यम् । ताभ्यां च पूर्वपश्चिम-कपालौ लक्ष्येते । कपालद्वययोगिनी याम्योत्तररेखात्मिकादिगुर्वशी पञ्चचूड-ब्राह्मणे भगवता भाह्वित्थिना दिशामप्सरस्त्वेनाख्यानात । भगवान याज्ञवल्क्यस्तु आहुतिरुर्वशीत्यभिमनुते । कपालद्वययोगादुत्पन्नोऽण्डरूपो मानः कुम्भः, आपोमयं चेदमन्तरिक्षं समुद्रः । समुद्रे विहरद्भ्यां मित्रावरुणाभ्यामुर्वश्यां दिश्याहुत्यां वा संयुज्यमानाभ्याभाग्नेयाप्यरेतोनिषेकादस्मिन् कुम्भे त्रिविधा मरुतः प्राणा उत्पद्यन्ते-शीतवीर्य्या उष्णवीर्य्या अनुष्णाशीतवीर्य्याश्च । आद्याः सोमधर्माणः सौम्या उत्तरायतनाः उत्तरा हीयं सौम्या दिक् तस्यां प्रचरन्तो हीमे वरुणसखाः प्राणावसिष्ठा इत्याख्यायन्ते आपवा आप्सवा वसिष्ठा इत्येकार्थाः । एते हि मरुतः प्राणा वरुणसख्यत्वस्वाभाव्याद्, अप्सु प्रविष्टा उभयोः समन्वया दद्भ्यः पृथिवीं जनयन्ति तत्राप्स्वनिवृत्त्युत्तरमुत्पन्ने पृथिवीत्वे तस्या अष्टौ व्याहृतयो भवन्ति आपः[1], फेनः[2], ऊषः[3], सिकताः[4], शर्कराः[5], अश्मा[6], अयो[7], हिरण्यमिति[8] । प्राथमिकी तावत् पृथिव्या व्याहृतिर्द्रवप्रायरूपत्वादापःशब्देनै-वाख्यायते । सा चातिरिच्यते पृथिवीत्वमनाप्ताभिमुख्याभिरद्भिः । आपस्ता-वन्मरुतं वृण्वते, स बुद्बुदो नाम । तत्रापां निम्नगतिस्वाभाव्याद् बुद्बुदशिरसो मन्दस्तरत्वोपपत्तावुत्क्रमणस्वभावो मरुन्मन्दबलं बुदबुदशिरो निर्भिद्य

बहिर्भवति । यत्र तु मरुतोऽल्पत्वादपां च भूयस्त्वाद् बुद्बुदशिरसो मन्दस्तरत्वं नोपपद्यते, तत्रायमवरुद्धो मरुन्नियतकालोत्तरमवसन्नो म्रियते। वरुणवैमनस्यादैन्द्री शक्तिरुत्क्रमणलक्षणा मरुतो निर्वतते। सोऽप्सु दत्तात्मा स्वं खरत्वमप्सु प्रक्षिप्य तदुभयविलक्षणधर्माणां पृथुत्वं गतमर्थं जनयति सा पृथिवी मृत्तिका नाम। इदानीं यावदपां द्रवणधर्मस्यैकान्ततोऽनपलापादियं पृथिव्याः प्रथमा व्याहृतिराप एवोच्यते। ततः क्रमेण परिपाकात् फेनोपऽसिकता जायन्ते, तथाचैतास्वप्सु येषां मरुतां प्राणानां संयोगादप्फेनोषःसिकताख्याश्च तस्रोऽप्सगमनस्वाभावा व्याहृतयः क्रमेण सृज्यन्ते, ते वासिष्ठा नाम प्राणाः स्युः। वेदात्सर्वा सृष्टिर्भूत्वा यज्ञाज्जीवतीति सिद्धान्तः। प्राणोर्गन्नानामन्योऽन्य परिग्रहो यज्ञ इति वाजिश्रुतौ व्याख्यातम्। ऊर्जा ह्यन्नं गृहीतं प्राणत्वमापद्यते। सोऽयमूर्जा शक्तिमानप्फेनोष सिकतागतो वसिष्ठप्राणोऽपएवान्नं भूयो भूयो गृह्णन्नात्मनि भावयति। तत एवैताश्चतस्रो व्याहृतयोऽद्भिः संमिश्रिता एकीभवन्ति। सोऽयमपां मूर्छनाददूभ्यः पृथिव्युत्पादकः प्राण उत्तरस्यां सप्तर्षिगतवसिष्ठाख्यताराताः परितो व्याप्नुवन् लभ्यते इत्यतः सा तारापि वसिष्ठ उच्यते। तत्सम्बन्धादेव च विषुवत उत्तरस्यामाधिक्येन वस्तुं योग्या निवासभूमयो लभ्यन्ते। नैवं दक्षिणस्यां समुद्रप्रयायामगस्त्याचरितायां दिशि। तदित्थं वसिष्ठा नाम शीतवीर्याः प्राणा व्याख्याताः।

अथ कुम्भजन्मान उष्णवीर्याः इतरे प्राणा यमधर्माणो याम्या दक्षिणायतनाः। दक्षिणा हीयं याम्या दिक्। तानगस्त्या इत्याचक्षते। एते हि मरुतः प्राणाः। तेषां च —

> किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव।
> तेभिः कल्पस्व साधु या मानः समरणेऽव धीः ॥१॥
> किं नो भ्रातरगस्त्यसखा सन्नति मन्यसे।
> विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥२॥ इति।
>
> (१/१७०)

इन्द्रागस्त्यसंवादश्रुतेरिन्द्रसख्यत्वं लभ्यते। इन्द्रसख्यत्वस्वाभाव्याच्च वरुणविरोधादप्स्वप्रविश्य तासामपामवयवान् विश्लेष्य तद्रसान् पीत्वा विला–

पयति । अप्फेनोषसिकतासृष्ट्युत्तरमगस्त्याख्यमरुत्संयोगादपां नियमनादप्-संमिश्रणविरोधिन्यः शर्करा[1]-अश्मा[2]-अयो[3]-हिरण्यमिति[4] चतस्रो व्याहृतयः क्रमेण सृज्यन्ते। तेनाष्टौ व्याहृतयः पृथिव्याः संपद्यन्ते। अपि चैतेऽगस्त्याः प्राणाः अन्तरिक्षरूपे समुद्रेऽपां रसं पीत्वाऽन्तरिक्षसमुद्रं निर्जलं कुर्वन्तीत्यत एवागस्त्यताराभ्युदयादूर्ध्वं वृष्टिचातुर्मास्यं निवर्तते। वर्षर्तुदोषाद् रजस्वलानां सरितामपामगस्त्योदयादूर्ध्वं रजसामद्भ्यो विच्छेदादापः शुद्धा भवन्ति। आपश्च पृथिवीबन्धनाद् विमुक्ताः क्रमेणोर्ध्वमाकाशमनूत्क्रमन्ते इत्यतस्तदानीं भूमावन्तर्निपाताद् भूमिपृष्ठे तिर्यक् प्रवहणाद्वियत्यूर्ध्वमुत्क्रमणाच्च त्रिपथगाः सम्पद्यन्ते। अगस्त्योदयादूर्ध्वमाकाशसमुद्रस्य निर्जलप्रायतया तत्रानिशं पार्थिव समुद्रादाप उत्क्रममाणा भवन्तीत्ययं समुद्रोऽपि सुतरां निपीतजलः क्रमेणोपपद्यते। तदिदमगस्त्यस्याकाशसमुद्रपीतत्वं भौमसमुद्रपीतत्वं च लोका आहुः।

अपि चेह द्विविधाः पर्वता भवन्ति-हिमाद्रयश्च विन्ध्याद्रयश्चेति। जलग्राहीप्राणतया जलक्लिन्नान्तर्जालकाः फल्गुसारप्रस्तरा विशीर्णपर्णजालत्वाज्जलोच्छूनोदरत्वाच्चात्यन्तमुन्नमन्तः पर्वता हिमाद्रयः, तद्विरुद्धा जलोत्क्षेपकप्राणतया शुष्यदन्तः स्तरा दृढसारा निर्जलोदरतयोत्तरोत्तरघनीभवदङ्गा विनमन्तः पर्वता विन्ध्याद्रयः। अप इन्धे उद्दीपयतीन्यबिन्धः प्राणविशेषोऽगस्त्यो नाम। तमर्हतीत्यबिन्ध्यः सन् बिन्ध्य इत्याख्यायते परोक्षम्। यथा चायं हिमाद्रिर्वसिष्ठप्राणाकृष्टजलोदरत्वादुच्छ्वयमानः प्रोन्नमुच्छृङ्गः समपद्यत, एवमयं विन्ध्याद्रिर्नीन्नमच्छृङ्गः समपद्यत, आगस्त्यप्राणनिक्षिप्तोदकसारत्वादुत्तरोत्तर घनीभावादधोऽधः संपातोपपत्तेः। तदिदमगस्त्य विन्ध्याद्रिनिग्रहणमाचक्षते पौराणिकाः। अतएव चास्य मरुत्प्राणस्यागस्त्यत्वमाख्यायते। अगं पर्वतमश्मानं स्त्यायति संहन्तीति व्युत्पत्तेः। सर्वे चैतेऽगस्त्यप्राणधर्मा नामसामान्यादगस्त्यप्राणद्रष्टरि विदुष्यगस्त्ये भक्त्या निक्षिप्यन्ते लोकैरित्यवसेयम्. अगस्तिरिति त्वगस्त्यस्य परोक्षव्यवहारः।

मत्स्यपुराणैकषष्ठि (६१) तमाध्यायेऽस्यागस्त्यस्याग्निमारुतत्वमाख्यायते। तारकाद्यसुराः सामुद्रजलदुर्गप्रच्छन्नाः सुगुप्ता नाजीयन्तेत्यत इन्द्रेण समुद्रं शोषयितुमादिष्टावग्निमरुतौ सहैकेन शरीरेण रूपमाधातुमुर्वश्यां मित्रावरुणरेतोभ्यामजायेताम्। ततोऽयमग्निमारुतोऽगस्त्यो भूत्वा समुद्रमशोषयदित्याह।

" काशपुष्पप्रतीकाश अग्निमारुतसंभव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तुते " ॥ १ ॥

इति च प्रार्थनामन्त्रमाह । तदेतदग्निमारुतत्वं जलशोषकमारुतस्यास्योष्णवीर्यत्वादवसेयम् । तदित्थमगस्त्या नामोष्णवीर्या मरुतः प्राणा आख्याताः॥ २ ॥

तथा चायं निष्कर्षः – उर्वशीनामके मध्यान्हवृत्ते सौम्ये उत्तरकपाले पूर्वापरकपालप्राणाभ्यामाहुत्या यः प्राणो निष्पद्यते स वसिष्ठोमरुत्प्राणः । स वरुणसखः । अथ तत्रैवोर्वशीनामके मध्याह्नवृत्ते याम्ये दक्षिणकपाले पूर्वापर कपालप्राणाभ्यामाहुत्या यः प्राणो निष्पद्यते सोऽगस्त्यो मरुत्प्राणः । स इन्द्रसखः । तदुभयसंक्रान्तधर्मा समवीर्या मरुत्प्राणो मत्स्यो नाम, तत्प्राणोपवर्षकश्च मध्याकाशे याम्यमत्स्यो नाम कश्चित् ताराविशेषो दृश्यते । तदित्थं त्रिविधाः सर्वे मरुतः प्राणाः । मरुतां सप्तसप्तकत्वेऽपि संहत्य सर्वे त्रिविधा एवेत्थं भवन्तीति निष्कर्षो द्रष्टव्यः ॥ ३ ॥

एषां च त्रिविधानां प्राणानां मध्येऽगस्त्यप्राणद्रष्टुरुपासकस्य विदुषोऽप्यगस्त्य इत्येव यशोनाम प्रख्यायते स्म । स च वसिष्ठवद् भारतवर्षीय एवासीन्न तु स्वर्गीयो देवः । " **अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चित् यत् सहस्रैः ।** " (ऋ. १/१८०/८) इत्येवमगस्त्येनैव स्वस्य नरत्वप्रतिज्ञानात् । तस्य च देवेन्द्रकृपया स्वर्गे गमनागमनसंभवो विज्ञायते ।

वसिष्ठप्राणसंवाहिकाया वसिष्ठताराया उत्तरदिग्वर्तितया तदुपासनानुरोधेन तत्प्राणद्रष्टुर्वसिष्ठस्य विदुषोऽप्युत्तरस्यां दिशि यथाऽऽश्रमः प्रदृश्यते तथैतस्या अगस्त्यप्राणसंवाहिकाया अगस्त्यताराया दक्षिणदिग्वर्तितया तदुपासनानुरोधेन तत्प्राणद्रष्टुरगस्त्यस्य विदुषोऽपि दक्षिणस्यां दिश्येव क्वचिदाश्रमः प्रसिध्यति । स च गोदावरीसंनिहितात् पञ्चवटीनाम्नो रामाश्रमाद् योजन द्वयान्तरे पूर्वमासीदिति रामायणे स्मर्यते ।

तत्रागस्त्यस्य वातापील्वलभक्षकस्य रामसमसामयिकस्यैव वेदमन्त्रद्रष्टृत्व मासीदिति नास्थीयते । " **युवां गोतमः पुरुमीढो अत्रिः ।** " (ऋ.१/१८३/४)

इति मन्त्रवर्णात् पुरुमीढसमकालिकस्य तस्य रामसमकालिकत्वासंभवात्। अगस्त्यगोत्रप्रवर्तकस्य प्राथमिकागस्त्यस्य वसिष्ठवन्मैत्रावरुणित्वं स्मरन्तीत्यादि-वसिष्ठसमकालिकस्य तस्य सूर्यवंशप्रवृत्तेरप्यतिपुरातनया रामसमये तस्या संभाव्यमानत्वात् । अगस्त्यवंशधराः सर्वेऽगस्त्या उच्यन्ते । अगस्त्यगोत्रस्य जातिवचनत्वात् सर्वेषां तद्गोत्रजातानामगस्त्यशब्देन व्यवहर्तुं शक्यत्वात् । गोत्रं द्वेधा जन्मना, विद्यया च तत्र न जन्मना गोत्रेऽयमगस्त्यशब्दो रूढः । किन्तु विद्यया गोत्रे पुत्रो वा शिष्यो वा यः कश्चिदेवागस्त्यां ब्रह्मपर्षदि तदध्यक्षो ब्रह्मासीत् सोऽयमन्योऽन्यः काले कालेऽगस्त्यः प्रतिपद्यते स्म । तस्माद्रामसमयेऽप्यन्यः कश्चनागस्त्यः संभाव्यते । "**शतायुर्वै पुरुषो भवतीति**" श्रुतेः । सर्वेऽप्येतेऽगस्त्यवसिष्ठादयः शतायुषो द्रष्टव्याः– इति दिक् ।

अस्यागस्त्यस्य मन्त्रसंहितायां सोऽगस्त्य[१] एकः । अगस्त्यपुत्र[२] एकः । अगस्त्य[३] पौत्रश्चैकः । अगस्त्यशिष्यः[४] । अगस्त्यपत्नी[५] । अगस्त्यभगिनी[६] । चत्वारोऽस्य भगिनेयाश्चेति[१०] दशर्षयो द्रष्टारः सन्ति ।

तत्रागस्त्योऽष्टर्चसूक्तेनाग्नि[८]मेकादशर्चसूक्तेनाग्निं[११] तुष्टावेत्यूनविंशत्यृचमाग्नेयं पर्व । चतुर्दशभिः सूक्तैर्ऋचामष्टादशशतेनेन्द्रं[११८] तुष्टावेति द्वितीयं पर्व । पचभिः सूक्तैरूनचत्वारिंशता ऋग्भिः अश्विनौ एकादशर्चसूक्तेन द्यावापृथिव्यौ, एकादशर्चसूक्तेन विश्वदेवान्, एकादशभिरोषधी, रष्टभिर्बृहस्पतिं, षोडशभिरबोषधिसूर्यान् तुष्टाव । षडभिरगस्त्यलोपामुद्राब्रह्मचारिणां संवादः – इत्येकादश सूक्तं द्व्यधिकशतमन्त्रकृतं[१०२] वैश्वदेव्यं तृतीयं पर्व । तदित्थमूनचत्वारिंशे द्वे शते : अगस्त्यार्षवृत्तम् । "**विद्यामेषं वृजनं जीरदानुम् ।**" इत्यगस्त्यस्य काव्याभिज्ञानं ध्रुवपदम् । अथागस्त्यपुत्रो दृढच्युतः षड्भिः पवमानम् । इध्मवाहो दार्ढ्यच्युतश्च षड्भिः पवमानं तुष्टाव । बन्धु–सुबन्धु–श्रुतबन्धु–विप्रबन्धवो लौपायना गौपायना वाऽगस्त्यभगिनेया अत्रिगोत्रा द्वाभ्यामग्निं षड्भिर्विश्वान् दशभिर्निर्ऋतिसोमासुनीतिद्यावापृथिवीन्द्रान्, षड्भिरसमातिं राजानमिन्द्रं, षड्भिः सुबन्धोर्जीवितावाहनं, द्वादशभिर्मन आवर्तनं तुष्टावेति द्वाचत्वारिंशत् ।

२९३

तदित्थं चतुःपञ्चाशन् मन्त्रमुत्तरागस्त्यं चतुर्थं पर्व । सेयं त्रिनवत्यधिकशत-द्वयेनागस्त्य संहिता पूर्णा ।

यद्यप्ययं मान्योऽगस्त्यो मनुष्यलोकस्थो न स्वर्ग्यस्तथाप्ययमगस्त्यप्रणीतो वेदसंहिताग्रन्थः स्वर्ग्य एवाभिज्ञायते । तद्वर्णितानां मनुष्यदेवानां भौमस्वर्ग-वासितया प्राणदेवानां स्वर्गवासिसूर्यप्राणतया च स्वर्ग्यार्थविषयकत्वात् ।

**सोऽयमैतिहासिको वैज्ञानिकश्च द्विविधोऽप्यगस्त्यो व्याख्यातः ।**

इति अगस्त्यः ।

---

| | | |
|---|---|---|
| १. | भृगुः | स्नेहः आप्यः आधिभौतिकः |
| २. | अङ्गिराः | तेजः आग्नेयः आधिभौतिकः |
| ३. | अत्रिः | चान्द्राधिदैवतः |
| ४. | मरीचिः कश्यपः | सौराधिदैवतः |
| ५. | वसिष्ठः | दक्षिणाधिदैवतः अपां गुरुत्वापादकत्वादपक्रामुकः |
| ६. | अगस्त्यः | उत्तराधिदैवतः अपां लघुत्वापादकत्वादुत्क्रामकः |
| ७. | विश्वामित्रः | आध्यात्मिकः |
| ८. | विश्वकर्मा | आध्यात्मिकः |
| ९. | दक्षः | आध्यात्मिकः |
| १०. | क्रतुः | आध्यात्मिकः |
| ११. | पुलस्त्यः | आसुरः |
| १२. | पुलहः | आसुरः |



# भृगुः–अङ्गिराः

## * अथ सर्वसृष्टिसाधारणो नियमः ।

(१) येनात्मनि दिव्यभावः संपद्यते, तदात्मनि मनोऽवच्छेदेन ज्ञानोदर्कोदयाप्रतिबन्धो ब्रह्मवीर्यम् । ततोऽस्मिन् ब्रह्मवर्चसं तेजः, आकारस्तपो–विद्याबुद्धिरित्येतानि बलानि संभवन्ति ॥ १ ॥ अथ येन वीरभावस्तदात्मनि प्राणावच्छेदेन क्रियोदर्कोदयाप्रतिबन्धः क्षत्रवीर्यम् । ततोऽस्मिन्नोजो, वाजस्तेज आकारः, ऐश्वर्य–पराक्रमोत्साह–प्रतापा इत्येतानि बलानि संभवन्त ॥ २ ॥ अथ येन पशुभावस्तदात्मनि वागवच्छेदेन धर्मोदर्कोदयाप्रतिबन्धो विड्वीर्यम् । ततोऽस्मिन् द्युम्नं तेज आकारः, वाणिज्यं, धनमित्येतानि बलानि संभवन्ति । अथ यत्र शारीरबलमात्रमुपपद्यते नात्मबलानामन्यतमसिद्धिः, तद् वीर्यं शूद्ररूपम् । ततो हि स आत्माऽऽशु शीघ्रमुत्कर्षेण द्रवते, क्लिन्नो भवति, विषीदति, अपि चातितरां द्राति, शेते, निष्कर्मालस्यं च धत्ते, तेनायं शूद्रो नाम । एतावदात्मनो वीर्यम् । यावद्वीर्यं तावद्वित्तम्, यावद्वित्तं तावदात्मा, आत्मा हि ब्रह्मेति सिद्धान्तः

## आत्मनो वीर्य्यत्रयम् ।

(२) तत्रैतदात्मनो मनोऽवच्छेदेन ज्ञानानामुत्थानप्रतिबन्धका धर्म्मा उपसन्ना ज्ञानव्याघातः पाप्मा । क्रियोत्थानप्रतिबन्धका धर्माः प्राणावच्छेदेनोप–सन्नाः क्रियाव्याघातः पाप्मा । अर्थोपलब्धिप्रतिबन्धका धर्मा वागवच्छेदेनोपसन्ना अर्थव्याघातः पाप्मा । तेषां चायमप्रतिबन्धो वीर्यम् । तत् त्रिविधम्– ब्रह्म, क्षत्रं, विडिति ।

## उक्थं प्रतिष्ठा सामेति कारणब्रह्मलक्षणम् ।

(३) उक्थं, प्रतिष्ठा, सामेति त्रिलक्षणमद्वितीयं किञ्चिदेकं तत्त्वं ब्रह्म । यत उत्तिष्ठते तदुत्थं सदुक्थं नाम । स्वतोऽनुपक्षीणं सद्पूर्वं भावयतीति बृंहणशीलत्वात् तद्ब्रह्म । उत्पद्योत्पद्यार्थजातं यत्र प्रतितिष्ठति सा प्रतिष्ठा नाम ।

---

* सोऽयंब्रह्मविवर्त्ते प्रदर्शिता ।

विभर्त्ति सर्वमिति भर्मत्त्वात् तद् ब्रह्म । अद्वयं उन्थितेषु अप्सु प्रतिष्ठितेषु फेन–हिम– श्लेष्माद्यर्थजातेषु यथाऽऽपः साम्येन वर्तन्ते, सिकता–शर्कराऽश्मायो–हिरण्येषु यथा पृथ्वीभावो दृश्यते, तथैतेषु सर्वेषु भिन्नेष्वपि यावद् भिन्नं सत्तासामान्यं तत् सर्वत्र समत्वात् साम नाम सर्वत्रोपबृंहितत्वाच्च तद् ब्रह्म । तदित्थं लक्षणम्–" ब्रह्म वेदमग्रआसीदेकमेवाद्वितीयम् । " (गो.ब्रा.पू.१/१)

## ब्रह्मणो व्याकरणम् ।

(४) तदव्याकृतपूर्वं बृंहणस्वाभाव्याद् व्याक्रियते । अविभक्तस्य विभक्त्युपपत्तिर्व्याकरणम् । उन्मुग्धावस्थस्योद्बुद्धावस्था व्याकरणम् । निर्विशेषा द्विशेषाभिव्यक्तिरुद्बोधः, मनःप्राणोवागिति सृष्टिसाक्षित्रैविध्येनारब्धः कर्मपुरुषोवा, मनो विज्ञानमानन्द इति मुक्तिसाक्षित्रैविध्येनारब्धो विद्या–रुषो वा–ब्रह्मणो व्याकृतं रूपम् । विद्यापुरुषः सृष्टिबन्धमोक्ता, कर्मपुरुषस्तु सृष्टिबन्धकर्त्ता । तानीमानि पृथग् ब्रह्माणि । तत्र मनस्तावद् ज्ञानानां, प्राणः क्रियाणां, वागर्थानामुकथं च भवति, प्रतिष्ठा च, साम चेति । अन्योन्याविना–भूतमेतत् त्रितयमेको भाव आत्मा नाम । " स वा एष आत्मा वाङ्मयः, प्राणमयः, मनोमयः " ( शत. १४/४/३/१० ) प्रतिपत्तव्यः ।

## आत्मनः सत्यरूपेण विश्वव्यापित्वम् ।

(५) आतश्चायमात्मा धर्माणि धारयमाणो धर्मी भवति । नानुपसृष्टः स कदाचिदुपपद्यते । प्राणः शक्तिः । तेनायं कुर्वद्रूपोऽनवरतं किञ्चित्करोति । " न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् " (भगवद्गीता) अनवरतं च किञ्चिज्जानाति । आत्मा, प्राणाः, पशव इत्येवं त्रिवृद्रूपं सत्यम । यावदुक्थं स आत्मा । सोऽर्चंश्चरतोत्यर्का एतस्य प्राणाः । अन्तर्याम–बहिर्यामो पयामादिभिस्तदनुगृहीताः पशुभावा अशितयः । आत्मन्यश्नुवते इत्यशितयः । उक्थमर्कोऽशितिरित्येवं त्रिवृत्कृतंरूपं सत्यम् सत्येन रूपेण पशुषु प्राणावस्थिति–रात्मनो ज्ञानं नाम विकासो रूपम् । तथा चायमेक आत्मा सर्वज्ञः सर्वशक्तिमान् सर्वधर्मोपपन्नश्च । सर्वा एताश्चेष्टाः सर्वा अभिव्यक्तयः सर्वा व्यक्तयश्चायमेको भाव आत्मा । नातोऽन्यत् किञ्चिदस्ति ।

साहचर्य्यादयं पञ्चमः सोमोऽपि दुर्वासोदत्तात्रेयभ्रातृकात् सोमाद्भिद्यते इति सुनिभृतं प्रत्येतव्यम् ॥

( ३५ ) अन्यस्यामन्यस्यां चानसूयायामन्योऽन्यः पुत्रोऽत्रेरुदभवत् । तत्रात्र्यनुसूयाशब्दसामान्यादत्रिपुत्रविशेषाणामुत्पत्तिविषये बह्वः खल्वैतिहासिका भ्रान्ता बभूवुः यथा विष्णु ( १।१०८ ) पुराणाद्यनुसारेण सोमदत्तदुर्वाससामनसूयागर्भजत्वे संभवत्यपि केचित्तावत् कर्दमसुनिकन्यायामनसूयायामेषां त्रयाणामुत्पत्तिमाहुः । अन्ये पुनर्भद्राश्वराजकन्यायां भद्राख्यायामनसूयायां सोमोत्पत्तिमन्यस्यां च भद्राश्वकन्यायां दत्ताद्युत्पत्तिमाहुः । तदेतदसमञ्जसं भ्रान्तं च । भद्राश्वदुहितरस्तावदिमाः कस्यात्रेः पत्न्य आसन् कस्य वाऽत्रेः कर्दमसुनिकन्या भार्य्यासीदिति विशिष्य न ज्ञायते । तथापि -दत्तदुर्वाससः प्रभृतयोऽत्रिपुत्रा उत्तरोत्तरकालानामत्रीणां प्रथक् प्रथक् पुत्राः स्युरिति संभावयामः । महाभरतयुद्धसमकालानां दुर्वासः प्रभृतीनामतिपुरातनचन्द्रसहोदरत्वाभिमानस्यानवक्लृप्तत्वात् । अथवास्तु सोमभ्रातृभ्यां दत्तदुर्वासोभ्यां भारताद्युत्तरकालिकयोर्दत्तदुर्वाससोरन्यत्वमिति सुधीभिरूह्यम् । सोमस्त्वयमाद्यस्यैवात्रेः पुत्र इति युक्तमुत्पश्यामः । सोमाय लोकपालत्वाधिकारप्रदानस्य प्रधानब्रह्माधीनतया प्रधानब्रह्मपुत्रादत्रेरेव तदुत्पत्तेरौचित्यात् ॥

( ३६ ) अथ यथा भौमस्यात्रेरयं सोमः पुत्र आसीत् तथैव सांख्यस्यात्रेः शांखायनो नाम पुत्रो बभूव । शांखायन इति यदृच्छाशब्दो नत्वपत्यप्रत्ययान्तः । अत्रेः प्रथमपुत्रत्वेन पुराणे स्मरणात् । सोऽयमतिसुन्दरो बलिष्ठोऽप्युग्रस्वभावोऽत्यन्तमधार्मिकश्चासीत् । स गिरिगह्वरेषु निवसन्नभक्ष्यमपि मांसं भक्षयति स्म । तद् भ्रतापि तथैवासभ्योभूत्वा वने वने विचरतिस्म । तयोस्तथाचरणात् परिक्रुद्धोऽयमत्रिः परिभर्त्सयंस्ताभ्यामाचारविचाराद्यर्थं बहूपदिदेश । यत्र तत्र वने विचरतोस्तयोर्निवासार्थमनेकस्थानान्यत्रिनाम्नैव कल्पयित्वा स्वयं सोऽत्रिः सिन्धुदेशे देवनिकायगिरौ गत्वा तत्रैव न्युवास । शांखायनतद्भ्रात्रोर्वंशधरा यवना बभूवुरिति केचिदाहुः ॥

( ३७ ) अन्यस्यात्रेः पुत्राणां म्लेच्छप्रायत्वेऽप्याद्यस्यात्रेः पुत्रस्य सोमस्यायं प्रकाशमयः पवित्रो वंश आदेवयुगादिदानीं यावदविच्छिन्नः प्रवर्तमानो ब्रह्मणा प्रवर्तितं वैदिकमेव धर्म्मं परिपालयन्नद्यापि दृश्यते । सोऽयं पवित्रो वंश आख्यायते ॥

सोऽयमैतिहासिको वैज्ञानिकश्च द्विविधोऽपि अत्रिर्व्याख्यातः ॥

॥ इति अत्रिः ॥



# कौशिको विश्वामित्रः

(१) "यथाग्निगर्भा पृथिवी तथा द्यौरिन्द्रेण गर्भिणी" इति मन्त्र-श्रवणात्। "इन्द्र इति ह्येतमाचक्षते—य एष तपति" (शत.४।५प्र.।६ब्रा.११) इति ब्राह्मणश्रवणाच्च सूर्य्यगतं प्राणमिन्द्र इत्याचक्षते। सूर्य्याद् विनिःसृता चैन्द्री वाक् परितः साहस्रं नाम मण्डलं तनुते। "एतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदः" (शत० ५।४ प्र०। ७ ब्रा०। १२ क०) इति श्रुतेः। साहस्रस्य विभक्त्योऽहानीत्याख्यायन्ते। तत्रैतत्साहस्रं तावत् त्रेधाविभज्यते—महोक्थं, महाव्रतं पुरुषश्चेति। नान्यस्मिन् सूर्य्ये ऋक् साम यजूंषि प्रतिपद्यन्ते। उत्तरोत्तरं ह्रस्वीभवन्तीनां परितः प्रथितानामनन्तमूर्तीनां समुद्रो महोक्थम् तदप्येकैकमर्कैराशितीरादत्ते। अथ परितो दिग्भ्योऽभिनाभि समायान्तं सोममयमन्नमश्नन्नाप्यायितः प्रतप्यमानोऽग्निसमुद्रो महाव्रतम्। यस्त्वग्निसमुद्रो देवानां भूतानां च सृष्ट्यै सर्वजगदर्थोपादानरूपेणोपयुज्यते स पुरुषो नाम। इत्थमिमानि त्रीण्यहानि त्रयः समुद्रा अन्योन्यसमदेशा अन्योन्यतोऽसंसक्तास्त्रीणि साहस्राणि जनयन्ति। तेषु यदिदं महाव्रतमहस्तेन रूपेण विश्वतोऽभिव्याप्तो विश्वतश्चान्नं सोममयमश्नन् प्रतपत्ययं त्रयीमयः सूर्य्यप्राणः। तमेतमिन्द्रप्राणं महाव्रतेनाह्नोपलक्षितं विश्वामित्र इत्याहुः। तथा चैतरेयारण्यके श्रूयते। "विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद। महान्नमित्यभिव्याहृत्य त्रिवृहतीसहस्रं शशंस। तमिन्द्र उवाच-ऋषे! प्रियं वै मे धामोपागाः। वरं ते ददानीति। स होवाच-त्वामेव जानीयामिति। तमिन्द्र उवाच-प्राणो वा अहमस्मि ऋषे, प्राणस्त्वं, प्राणः सर्वाणि भूतानि। प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रम्। एष तपन्नेवास्मीति होवाच" (आ० २ अ० २ खं० ३) इति। छन्दानुवृत्तिसंवर्द्धनं च दक्षि-

णम् । तदन्नं प्राणस्य विश्वाविष्टस्य मित्रं संलग्नं भवतीति वैश्वामित्रं नाम । तद्विशिष्टोऽयं महाव्रताहरात्मकः सौरः प्राणो विश्वामित्रः । प्राणस्येत्थं विश्वामित्रत्वाख्याने । "वाग् वै विश्वामित्रः" इत्येवं वाचो विश्वामित्रत्वं श्रावयन्त्याः कौषीतकि श्रुतेस्तु ( १५।१ ) विरोधो नाशङ्क्यः । "तद्वा एतत् सहस्रं वाचः प्रजापतं द्वे इन्द्रस्तृतीये, तृतीयं विष्णुः ऋचश्च सामानि चेन्द्रो यजुंषि विष्णुः" ( शत. ४।५ प्र।६ ब्रा।३ कं ) इति श्रुत्या वागात्मक-साहस्रविभक्तेरह्नो वागरूपस्वान । "उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्च नैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरेयथाम्" ( ऋ. ६।६।६।८ ) इति मन्त्रव्याख्यायामैतरेयब्राह्मणे अष्टाविंशेऽध्याये । "किं तत् सहस्रमिति । इमे लोकाः इमे वेदा,ः अथो वागिति ब्रूयाद्" इति श्रुत्या च वाच एव सहस्रतया तद्विभक्तिरूपस्याह्नोऽपि तदनतिरिक्तत्वात् । स इत्थमयमधिदैवतं व्याख्यातः । एवमेवायमध्यात्मं द्रष्टव्यः । "तद् योऽहं सोऽसौ योऽसौ सोऽहम्" तदुक्तमृषिणा "सूर्य आत्मा जगतस्तस्थुषश्चेति इत्यैतरेयारण्यकश्रुते; सूर्यरसादुद्भूयमान एवायमध्यात्मं विज्ञानमयः क्षेत्रज्ञ आत्मा । सोऽपि बहिर्वत् त्रयाणां समुद्राणामन्तः शेते इत्यस्मादिन्द्राद् विश्वतः प्रथितोऽयमन्तःस्थो महाव्रताहरात्मकोऽन्नमश्नन् प्राणो विश्वामित्रः ।

( २ ) स एष प्राणो बृहत्यात्मको द्रष्टव्यः । "वाग् वा अनुष्टुप् प्राणो बृहतीति श्रुतेः । "सर्वं हीदं प्राणेनावृतम् । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः तद्यथायमाकाशः प्राणेन बृहत्या विष्टब्धः एवं सर्वाणि भूतान्यापिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात्" ( आ. २।१।६ ) इत्यैतरेयश्रुतेश्च,) षट्त्रिंशदक्षरत्वाच्चैतस्य बृहतीत्वमद्धोपपद्यते एकैकं चेदमक्षरं दशिनी विराट् । तेन षष्टिशतत्रयमक्षराणां लभ्यते । एतावन्ति च संवत्सरस्याहानि ततः संवत्सरादुपेतत्वात् तावद्विभागोऽऽयं प्राणो न आत्मा संवत्सरात्मकस्याप्यस्य बृहतीत्वमक्षराणां विराट्त्वापेक्षाय द्रष्टव्यम । अपि चायं प्राणः शरीरे दशधा भवति । "अयं वै प्राणो योऽयं पवते । यो वै

प्राणः स आयुः। सोऽयमेक इवैव पवते। सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः" (५।२।३।१०) इति वाजिश्रुतेः। बृहतीत्वात् षट्त्रिंशदक्षरोऽयमिन्द्रः प्राणो विराजोपसंपद्यमानो दशधा विहितःसन् षष्टिशतत्रयात्मको लक्ष्यते। स पुनर्दशधाकृतो यदि भूयो दशधा क्रियते तर्हि स षट्त्रिंशत्-सहस्रात्मकः संपद्यते। न हि तत्सहस्रं दशत्वादतिरिच्यते। "तदेतत् सहस्रं तत् सर्वम्। तानि दश। दशेति वै सर्वम्। एतावती हि संख्या दशदशतस्तच्छतम्। दशशतानि तत् सहस्रम्, तत् सर्वम्"। (ऐ. आ. २।३।४) इति श्रुतेः। स एष बृहतीसहस्रात्मकः प्राणा आत्मा। तस्यारम्भकाणामेषां सर्वेषामक्षराणां शरीरादुत्थाय परज्योतिरुपसंपत्तौ स्वेन रूपेणाभिनिष्पत्तावयमात्मा त्यक्तशरीरः सूर्य्यं गतो भवतीत्यत एवास्य प्राणस्य पुरुषायुषत्वमाहुः। तथा च श्रूयते। "अ इति ब्रह्म। तत्रागतमहमिति। तद्वा इदं बृहतीसहस्रं संपन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति। तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति। जीवाक्षरेणैव जीवाहराप्नोति। जीवाह्ना जीवाक्षरम्" इति (ऐ. आ. २।३।८) "प्राणो वा आयुः। प्राण उह्यमृतम् यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" (कौ० ब्रा० उ०) इति च। अयमर्थः षट्त्रिंशत्सहस्राक्षराज्जीवात्मनोऽस्माद् विस्रस्तमेकैकमक्षरमहरहः स्वर्गं गच्छद्भिर्व्याधीयते। विरक्ते च तत्स्थाने सूर्य्योदयास्तपरिच्छिन्नमेकैकमहरात्मन्याधीयते। आहितानां तु नात्मत्वमुपपद्यते। प्रज्ञात्मनो भूतात्मनस्तत्रागन्तुकेषु संपरिष्वङ्गायोगात् प्रज्ञात्मना श्लिष्टेन शरीरेणैषामसंधानात्तदनभिमानात्। तस्मात्तच्छतसंवत्सरान्ते सर्वेषामात्माक्षराणां विस्रंसनाच्छरीरमात्मना हीनं विपद्यते। विस्रस्तानि च सर्वा एवात्माक्षराणि शरीरादुत्थाय सूर्य्यं गतानि भवन्ति। सूर्य्यरसरूपं विशुद्धं ब्रह्मविज्ञानमकारेण लक्ष्यते तत्र ह्मतीति व्युत्पत्त्याऽयमध्यात्मं विज्ञानमयोऽक्षरव्यूह आत्मा "अह" मिति समाख्यायते। तदाह—"अ इति ब्रह्म। तत्रागतमहमितीति। अथखलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति। यो वै प्राणः सा प्रज्ञा। या वा प्रज्ञा

स प्राणः । स ह ह्येतावस्मिन् शरीरे वसतः सहोत्तिष्ठतः'' इति कौषीतकि श्रुते-रिन्द्रप्राणव्युत्थानेन सहैवायं प्रज्ञात्मपि शरीराद् व्युत्थाय कर्मगतिं गतो भवति । पृथिवीगृहीताच्छरीरात् संबन्धमुच्छिद्य लोकान्तरं गते प्रज्ञात्मनि विधर्त्रभावादिदं शरीरं पृथिव्याकृष्टं निपतति, पञ्चत्वं याति ।

( ३ ) प्राज्ञस्त्वयमात्माप्यक्षराणां संघातोऽमुस्मिन्निन्द्रप्राणो बृहतीसहस्राक्षरसंघातरूपे संपरिष्वज्यते । तत्र मनःप्राणवाचामैकात्म्येऽक्षरशब्दः । तं चाक्षरप्राणमाचक्षते । प्राज्ञेचायमक्षरप्राणः सप्तविधः संहत्यैकमात्मानमारभते मनो, वाक्, प्राणः, चक्षुः श्रोत्रं कर्माग्निरिति । प्रत्येकस्यैषामुक्थस्य षट् त्रिंशत-सहस्राण्यर्काः श्रूयन्ते वाजिश्रुतौ—तदिदं मनः सृष्टमाविरबुभूषत् निरुक्ततरं मूर्त्ततरम् तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत तत् प्रामूर्छत् तत् षट्-त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान्मनश्चितः । तद् यत् किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः । एतावती वै मनसो विभूतिः । एतावती विसृष्टिः । एतावन्मनः षट्-त्रिंशत्सहस्राण्यग्नयोर्काः'' ( १०।४।१ ) इति । एषैवानुविधा वाक् प्राणादिष्वपि तत्र श्रूयते । तथा च मनो वाक् प्राणश्चक्षुः श्रोत्रमिति पञ्चधा विभक्तः प्राणः प्रज्ञात्मा । तैजसः प्राणः कर्म्मात्मा वैश्वानरः प्राणोऽग्न्यात्मा इतीत्थं त्रेधा विभक्तः सप्तधा विभक्तो वा भूतात्मा । तत्राग्निरयं द्वेधा—चित्यश्चितेनिधेयश्च लोमत्वगसृग्मांसमेदोऽस्थिमज्जशुक्रैश्चेतने,वल्कल-निर्य्यास-दारु-सार-रसैर्वृक्षे, किंशारु-तुषफलीकरणकिक्कस कंसारैर्यवधान्ये त्वग्रसगूढबालबीजमज्जाभिः फले, तथान्यत्रान्यैश्चयनीयैरवयवैश्चीयमानश्चित्यः तच्छरीरम् । तत्र दृष्टोऽयमूष्मावैश्वानरोश्चितेनिधेयः तदन्तर्गतो वयोऽवस्थानिर्वर्तकः प्राणः कर्म्मात्मा । तदन्तरर्गतः प्रज्ञात्मा । तत्र चित्येन चितेनिधेयेन चात्मनाऽऽत्मन्विनोऽसंज्ञा जीवा रत्नधातूपधातुरसोपरसादयः । ताभ्यां च तैजसेन चात्मन्विनोऽन्तः संज्ञा जीवास्तृणगुल्मौषधिवनस्पत्यादयः । तैश्च प्रज्ञात्मना चात्मन्विनः ससंज्ञा जीवाः कृमि-कीट-पक्षि-पशु-मनुष्यादयः ।

( ४ ) सोऽयं भूतात्मा यमन्यमात्मानमध्याश्रित्य पुरुषायुषमनुजीवन् शरीरेणसंवर्तते स बृहतीसहस्रात्मायमिन्द्रः प्राणः । "तद्वा इदं बृहतीसहस्

संपन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः" ( ऐ० आ० २।३।७ ) इतिश्रुतेः। "स आयुः मामेव विजानीहि। एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्। प्राणोऽस्मि प्रज्ञात्मा। तं ममायुरमृतमित्युपास्स्व" -इति कौषीतकि श्रुतौ प्रतर्दनं प्रतीन्द्रोक्तेः। तमन्वेवाध्याश्रिता इमे प्रज्ञादयो भूतात्मारम्भका भागाः सन्ति। "तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद" इति श्रुतेः ( ऐ० आ० २।२।४ )। तत्रैतस्मिन् प्रज्ञात्मनि विज्ञानात्मनो यावदधिकं संस्रवात् प्रतिष्ठा स्यात् तावदयं प्रज्ञात्मा तेनैव ब्रह्मणा विद्यया सर्वकषायदाहाद्विशुद्धिमागतः पाप्मभिर्विरहितो विज्ञानात्मरूपेणाभिनिष्पद्यते। स कर्मभिः कामैश्च विमुच्यते न स कर्मभोगाय लोकान् परिभ्रमति। तदेतत्सर्वं पश्यतां प्राचां महर्षीणां श्लोकानाह भगवानैतरेयः—

"यदक्षरं पञ्चविधं समेति, युजो युक्ता अभि यत् संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥१॥
यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत् संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥२॥
यस्मिन्नामा समतृप्यन् श्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गलोकमप्येति विद्वान् ॥३॥" इति।

अयमर्थः। शरीररूपेण परिणतं पञ्चविधं भूतजातं वा इन्द्रियरूपेण परिणतं पञ्चविधं देवजातं वा यदक्षरं मुख्यप्राणमनुसमन्वेति। युञ्जानाः सन्तो युज्यमाना इमे रश्मिरूपाः सर्वप्राणा अपि अन्योन्यसंश्लिष्टा यदक्षरं मुख्यप्राणमभिसंवाहयन्ति। "अथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यम्"—इति वाजिश्रुतेः शरीराधारभूतप्राणानामाधारभूतं मुख्यप्राणमनुलक्ष्य यत्र भागे सर्वैर्देवैर्युज्यते तत्रैतस्मिन् मुख्यप्राणभागे सर्वे देवा अविस्पष्टभेदत्वादेकत्वं यान्ति ॥ १ ॥

अपि च एतत्पञ्चविधं भूतजातं देवजातं वा एतस्मान्मुख्यप्राणादक्षरात क्रमेणोपसृष्य यदन्यदक्षरं प्रज्ञात्मानं युक्तमभ्येति। रश्मयश्च प्राणा अन्योन्ययुक्ता यत् प्रज्ञानमभि संवहन्ति। सत्यस्य सत्यं मुख्यप्राणोऽपि यस्मिन् प्रज्ञानेऽनुयुज्यते तस्मिन् प्रज्ञाने सर्वे देवाः संहृत्यैकत्वमायान्ति ॥ २ ॥ यद्यप्येवं विज्ञानात्मनि प्रज्ञानात्मनि चोभयत्रैव सर्वे देवा एकंभवन्ति तथापि यस्मिन्नात्मनि श्रुते नामानि सर्वाणि स्त्रीत्वपुंस्त्वक्लीबत्वभेदितानि संतृप्यन्ते समर्थन्ते न व्यावर्तन्ते, तत्र स्त्रीपुंक्लीबेष्वविशेषरूपे विज्ञानात्मन्येव देवाः सर्वथा युक्ता द्रष्टव्याः। सर्वे देवा इन्द्रियंरूपाः प्रज्ञात्मनि दृष्टा अपि मुख्यतया विज्ञानात्मन्येव प्रतिष्ठिताः सन्ति। प्रज्ञात्मारम्भकं तदन्तर्हितं विज्ञानात्मानमेवाश्रित्य प्रज्ञेऽपि सर्वे देवाः संहन्यन्ते इत्यर्थः। विज्ञानस्यैव सूर्य्यरसस्य कश्चिदंशो भूगर्भमभिसृप्तः पृथिव्यात्मभूतः पार्थिवमिदं प्राणिशरीर मभिसंपद्यमानः पाप्मभिः शरीरधर्मैः कामशुक्रादिभिः संसृज्यते। ततः स प्रज्ञानात्मा नामोपपद्यते । तस्मिंश्च पृथीरसात्मनि प्रज्ञाने सूर्य्यरसात्मनो विज्ञानस्यै तस्यातितरां समन्वयात् तेन ब्रह्मणा विज्ञानेन सर्वेषां पाप्मनां कामशुक्राद्यविद्याकषायाणामुच्छेदाद्विशुद्धविज्ञानात्मनाभिनिष्पत्तौ प्रज्ञात्मा स्वर्गं याति सूर्य्यं नाम। स प्रज्ञानत्वाद्विमुच्यते। सूर्य्यरसरूपं विशुद्धं चिन्मयं मनोमयं विज्ञानमकारेण लक्ष्यते इत्युक्तम्। तत्र हम्मतीति व्युत्पत्त्याऽयं प्रज्ञात्माऽप्यहमित्याख्यायते इतिबोध्यम्।

(५) एष च विज्ञानात्मा बृहतीसहस्राक्षरः सौरः प्राणोऽध्यात्ममप्यधिदैवतवद् विश्वतः प्राणान् धत्ते। **"तस्य प्राची दिक् प्राञ्चः प्राणाः दक्षिणा दिक् दक्षिणे प्राणाः। प्रतीची दिक् प्रत्यञ्चः प्राणाः। उदीची दिगुदञ्चः प्राणाः । ऊर्ध्वादिगूर्ध्वाः प्राणाः । अवाचीदिगवाञ्चः प्राणाः। सर्वादिशः सर्वे प्राणाः"** (१४।६।११) इति वाजिश्रुतेः। विश्वतो हीमे प्राणा अस्मिन्नामेदन्ते, मेद्यन्ति चामुष्मिन् विश्वतोऽन्नानि तस्मादयं महाव्रताह्वः प्राणो विश्वामित्रो नामाख्यायते। तत्सवितुर्वरेण्यं भर्गोऽधिशरीरमाविश्य विज्ञानमय आत्मासंपद्यते। धियो योनः प्रचोदयति। तमेतं प्राणमनुवर्णयति कौषीतकिः। **"एष ह्येवैतं साधुकर्म कारयति तं यमुन्निनीषति, एष एवैनमसाधुकर्म्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सते यमधो**

तितीर्षति स म आत्मेति विद्यात्" (कौ० उ० ३) इति। हितं प्रियं च कर्म्म कर्तुं प्रवर्तयतीत्येष प्राणो विश्वेषांमित्रं तस्मात् विश्वामित्रः। "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" इति कौषीतकिश्रुतेरायुःस्वरूपं तमेव प्राणमाराधयितु मुभयोः सन्ध्ययोः सूर्य्यमुपतिष्ठन्ते ब्राह्मणाः सावित्रीं च गायत्रीं वैश्वामित्रीं ध्यायमानाः प्रजपन्ति। सहि गायन्तं त्रायते गयांश्चप्राणांस्त्रायते। आराधयन्तस्तत्संपत्त्या दीर्घायुषो भवन्ति। तथा च स्मर्य्यते—"ऋषयोदीर्घसंध्यात्वाद्दीर्घमायुरवाप्नुयुः" इति। येत्वेनामयथा कुर्वते न ते फलेन संपद्यन्ते। तस्मात् सावहितोऽहरहः संध्यामुपासीतेति महतामादेशः। इत्थमयं विश्वामित्रः प्राणोऽधिदैवतमध्यात्मं च व्याख्यातः।

(६) अथ यः खलु विद्वानेतं विश्वामित्रप्राणमपश्यत्, प्राणस्य च तस्य यो विश्वामित्र इति नामधेय मकरोत् स तत्प्राणद्रष्टा विद्वानपि यशोनाम्ना विश्वामित्र एव आख्यायते। स च मनुष्यविधो विश्वामित्रो महोदयनाम्नि नगरे राजासीत्। यदिद कान्यकुब्जंनाम नगर मिदानीमुपलभ्यते, तत्र पुरा द्रुपदस्य राज्ञो द्रोणस्य वा ब्राह्मणस्य राजधान्यासीदहिच्छत्रा नाम। तत्रैवातिपुरातनकाले वैजयाख्यक्षत्रियवंश्यानां राज्ञामधिष्ठानं नगरमासीत्महोदयं नाम। तत्र विश्वरथो नाम राजासीचन्द्रवंशीयः। केचित्तु कौशाम्बींनाम नगरीमस्य राजधानीमाहुः। सहि विश्वरथः पुरूरवसमारभ्य विजयापरसंज्ञामायुशाखागोत्रे त्रयोदशो वा दशमो वा भवति। तात्कालिकस्य च वसिष्ठस्य ब्रह्मवीर्य्यानुगं महात्म्यं दृष्ट्वा ब्रह्मवीर्यात् क्षत्रवीर्य्यमल्पं मन्यमानः स तपस्तप्त्वा ब्राह्मणोऽभवत्। स विश्वरथो राजा विश्वामित्राख्य प्राणदर्शनप्रभावात् ब्रह्मत्वे विश्वामित्रोनाम्ना प्रथितोऽभूत्। "विश्वस्य ह वै मित्रं विश्वामित्र आस" (ब्रा० अ० २६) इत्येवमेतं प्रशंसत्यैतरेयः।

(७) स च पुरूरवसमारभ्यायुशाखागोत्रे चतुर्थस्य ययातेः समकाल आसीत्। गुरुदक्षिणां दित्सोः स्वशिष्यस्य गालवस्य विश्वामित्रेण ययातिं नाहुषं प्रति प्रेष्यमाणत्वात्। तच्च कालसाम्यं ययातिपूर्वपुरुषाणां दीर्घायुष्ट्वाद विश्वामित्रपूर्वपुरुषाणामल्पाल्पायुष्ट्वाच्चोपपद्यते। इक्ष्वाकुवंशे हर्य्यश्ववसुमनस्त्रिधन्वस्वत्रय्यारुणसत्यव्रतहरिश्चन्द्ररोहिताश्वानां सप्तानां पुरुषाणामिक्ष्वाकुतः

पञ्चविंशादीनां समकालोऽयमेको विश्वामित्रः। कश्चिदन्यो भवेदन्यश्च कश्चिद् भवेद्रामसमसामयिकः। एकस्यातिदीर्घकालजीवित्वासंभवात्। मनुष्याणां शतायुष्ट्वसिद्धान्तात्। वसुमना ह्यार्य्यश्विरयोध्यायां, प्रतर्द्दनो, दैवोदासिः काश्यां, शिविरौशीनरिर्भोजपुरे, अष्टको वैश्वामित्रिः कान्यकुब्जे, इत्येते चत्वारः सहोदराः ययातिकन्यायां माधव्यामुत्पन्ना विश्वामित्रेण समकाला आसन्निति पौराणिका आहुः।

(८) एष च विश्वामित्र शब्दो न तत्प्राणद्रष्टृव्यक्तिमात्रे, नाऽपि तत्पुत्रपरम्परायामेव रूढः किन्तु वैश्वामित्र्यां ब्रह्मपर्षदि तत्पुत्रो वा तच्छिष्यो वा य एव कश्चित् काले काले पर्षदधिष्ठाता ब्रह्मासीत् सोऽन्योऽन्यो विश्वामित्रः पर्षदधिष्ठातरि ब्रह्मणि विश्वामित्रशब्दप्रवृत्तेः। गोत्रे रूढः सोऽयं विश्वामित्रशब्दो जातिशब्दत्वात् वसिष्ठादिशब्दवदेकवचनान्तो बहुवचनान्तो वा प्रयुज्यते। तृतीयमण्डले त्रिपञ्चाशसूक्तस्य सप्तमीनवम्योर्ऋचोरेकवचनदर्शनात् प्रथमसूक्तस्यैकविंश्यामृचि बहुवचनदर्शनाच्च। तत्र बहुवचने सर्वासां व्यक्तीनां स्वशब्देनैवविश्वामित्रत्वं द्रष्टव्यम्। अप्रत्यक्षप्राणविशेषद्रष्टृत्वरूपस्य ऋषित्वस्य तच्छब्दप्रवृत्तिनिमित्तस्य सर्वत्राविशेषात्। विश्वामित्र इत्यादौ अपत्यप्रत्ययलोपं वदन्तो वैयाकरणास्तु नाक्षेप्याः। व्याकरणप्रक्रियायाः शब्दरूपाभिज्ञानाभ्युपायमात्रत्वात्। नासूया कर्तव्या यत्रानुगमः क्रियते इति नैरुक्तत्वात् त इमे विश्वामित्राः कुशिका अप्युच्यन्ते। त्रिपञ्चाशसूक्तस्य नवमीदशम्योर्ऋचो विश्वमित्रगोत्रजाभिप्रायेणैव कुशिकशब्द प्रयोगात्। ऐतिहासिकमनुष्यगोत्राभिप्रायेण प्रयुक्तयोरेव कुशिक विश्वामित्रशब्दयोः पर्य्याय वाचित्वम्। न तु प्राणविशेषाभिप्रायेण प्रयुक्तयोः विश्वामित्र प्राणा पेक्षया कुशिकप्राणस्यातिरिक्तत्वात्। इन्द्रत्वसामान्याभिप्रायेण तूभयोरेकभाव्यं मन्यन्ते इति दिक्।

(९) सर्व एवैते भिन्नभिन्नकाला विश्वामित्रा मन्त्रद्रष्टारः। तत्र हरिश्चन्द्रसामयिकस्यैवैते मधुच्छन्दः प्रभृतयः पुत्रा आसन्। देवरातस्य शुनःशेपपूर्वाख्यस्य मधुच्छन्दः प्रभृतिनोऽपि ज्येष्ठत्वेन पौराणिकैराख्यानात्। सर्वविश्वामित्रसाधारणी चेयं वैश्वामित्री संहिता द्रष्टव्या। विश्वामित्रगोत्रस्य च वसिष्ठ

गोत्रेण प्रतिपन्थितया वृत्तिरपि सर्वव्यक्तिसाधारण्यात् स्मर्य्यते । तत्र विश्वामित्रस्य पितापितामहःप्रपितामहश्चेत्येकतस्त्रयः । विश्वामित्रः स्वयमेकः । विश्वामित्रस्याष्टौ पुत्राश्चत्वारः पौत्राः इत्येवं पञ्चदश व्यक्तयः स्मर्य्यन्ते । तेषु प्रपितामह इषीरथस्तावदृषिर्नास्ति मन्त्रद्रष्टृत्वास्मरणात् ।* पितामहः कुशिकः पिता गाथी मन्त्रद्रष्टृत्वाभावेऽपि नैपातिकावृषी संभाव्येते विश्वामित्रवंशस्य कौशिकगोत्रत्वेन लोके प्रतिपत्तेः । ऋष्यारब्धवंशस्यैव गोत्रत्वेनाख्यानात् । अथवा अनृषी एव स्याताम् । विश्वामित्रस्य महर्षेः कौशिकशब्देन ग्रहणात् तत एवास्य गोत्रस्य कौशिकत्वसंभवात् । यत्तु दाशतय्यां कुशिकगाथिनोरार्षेयं स्मर्य्यते तद्विश्वामित्रस्यैवार्षेयं द्रष्टव्यमिति केचिदाहुः । वस्तु तस्तु कुशिकगाथिनावप्येतावृषी एव स्याताम् । ऋष्यन्तरवदेतयोरप्यार्षेयस्मरणात् । कौशिकगोत्रं तु कुशिकाद्वा विश्वामित्राद्वा प्रवर्ततामिति नातिविशेषः । एष च विश्वामित्रो मैथिल आसीत् । मिथिलाप्रदेशे पूर्वस्यां कौशिकी नाम नदी वहति । तदुपलक्षिते एव प्रदेशे कुशिकाश्रमस्य निर्धारितत्वात् । तथाहि बृहद्विष्णुपुराणे मिथिलामहात्म्ये । **"विश्वामित्रस्तु पूर्वस्यां दिशि वासमकल्पयत्"** इत्युक्तम् । यामलसारोद्धारे मिथिलाखण्डेचैवमाह । **विश्वामित्राश्रमे प्राच्या- मृग्वेदध्वनिनादिते"** इत्यादि । महाभारतस्यारण्यके च स्मर्यते । **"कुशिकस्याश्रमं गच्छेत् सर्वपापप्रमोचनम्"** इति । अत एव च विश्वामित्रवंशजन्मा याज्ञवल्क्योऽप्यस्यां मिथिलायामेव गौतमाश्रम प्रत्यासन्नवर्तिनो जयन्तपुरस्यात्यन्तसंनिधाने धनुर्यज्ञमहारण्ये निवसतिस्म । अद्यापि तस्याश्रमस्य मिथिलायां सुप्रसिद्धत्वात् इतिभाव्यम् । विश्वामित्रो ह्येष शतर्ची महामहर्षिः । पुत्रेषु तु धुच्छन्दो देवरातादयः केचन शतर्चिनः । परे महासूक्तक्षुद्रसूक्ताः । यद्यप्यस्य शतं पुत्राः स्मर्य्यन्ते पौराणिकैः । तेषु च पञ्चाशज्जघन्यजाः वनेचराः दस्युप्राया म्लेच्छा एवाभवन् परे तु ज्येष्ठा पञ्चाशदासन् ब्राह्मणाः विद्वांसः । किन्तु

---

* १—इषीरथः ( अनृषिः ),
२—कुशिक ऐषीरथिः,
३—गाथी ( गाधी ) कौशिकः,
४—विश्वामित्रो गाथिनः — इति ।

तेष्वप्यष्टावेव पुत्राः ऋषयः स्मर्य्यन्ते देवरातः, मधुच्छन्दाः, कतः, ऋषभः, रेणुः, अष्टकः, पूरणः, प्रजापतिः इति । अथ जेता अघमर्षणश्चेत्येतौ माधुच्छन्दसौ, उत्कीलः कात्य इति त्रयः पौत्राः ।

( १० ) अत्रायं देवरातः पूर्वमजीगर्तस्यानृषिब्राह्मणस्य त्रिषु पुत्रेष्वन्यतमः पुत्र आसीच्छुनःशेपो नामाङ्गिरसः । केचित्तु पौराणिका अजीगर्तशुनःशेपयोर्भार्गवत्वमाचक्षते तच्छ्रुतिविरोधादनुपादेयम् । "यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम्" "आङ्गिरसो जन्मनास्याजीगर्तः शुनः कविः" इतिच बह्वृचश्रुतेः । स हरिश्चन्द्रस्य राज्ञो वारुणे यज्ञे क्रीतः पुत्रोऽभूत् । तत्रायं विश्वामित्रेण पशुत्वात् प्रमोचितः सन्नमुष्य विश्वामित्रस्य पश्चात् कृत्रिमः पुत्रो भूत्वा विश्वामित्रकृपया पुत्रेषु ज्यैष्ठ्यं वेदं चालभत । तेनायमृषिः समुदभूद्देवरातो नाम । मधुच्छन्दास्तु विश्वामित्रस्यौरसो ज्येष्ठः पुत्रः ।

( ११ ) कुशिको द्वेधा-ऐषीरथिश्च सौभरिश्च । तेनायं विचिकित्सितः । एवं प्रजापतिस्त्रेधा-वैश्वामित्रो वाच्यः । परमेष्ठी च । प्रजापतेः पुत्रपौत्रप्रपौत्रवृद्धप्रपौत्राः स्मर्य्यन्ते । यथा-हिरण्यगर्भः । विष्णुः, यज्ञः, दक्षिणा, प्रजावान्, विमदः, यक्ष्मनाशनः, पतंगः संवरणः, इति नवैते प्राजापत्याः । मनुः सांवरणः । अथ नाभानेदिष्ठः शार्य्यातो नाहुषश्चेति त्रयो मानवाः । ययातिर्नाहुषः इति । एष नावधार्य्यते कस्यैते हिरण्यगर्भादयः पुत्राः वैश्वामित्रस्य वा वाच्यस्य वा परमेष्ठिनो वेति । मनुरप्ययं नानाविधः स्मर्य्यते । तत्र न ज्ञायते कस्यैते नाभानेदिष्ठादयः पुत्र पौत्रा इति, तन्मृग्यम् ।

( १२ ) यद्यप्ययं विश्वामित्रो मनुष्यलोकस्थो न स्वर्ग्यः । तथाप्ययं विश्वामित्रकृतो वेदसंहिताग्रन्थः स्वर्ग्य एवाभिज्ञायते । तद्वर्णितानां मनुष्यदेवानां भौमस्वर्गवासितया प्राणदेवानां सूर्य्यस्वर्गवासितया च स्वर्ग्यार्थविषयकत्वात् ।

( १३ ) तत्रैतस्यां कौशिकसंहितायां कुशिक ऐषीरथिरिन्द्रं द्वाविंशति (२२) मन्त्रैस्तुष्टाव । कुशिकपुत्रो गाथी दशभिरग्निं, पञ्चभिः पुरीष्यानग्नीन पञ्चभिरग्निसंबन्धिनो विश्वान् देवांस्तुष्टाव इति विंशति ( २० ) मन्त्रं गाथिन आर्षेयम् । तदिदं द्विचत्वारिंशता पौर्विकं पर्व प्रथमम् ।

( १४ ) अथ गाथिपुत्रो विश्वामित्रस्त्रिंशेन शतेनाग्निसामान्यमेकादश-

भिराप्रियमूनत्रिंशता वैश्वानराग्निं, षड्भिर्मरुदादीन्, नवभिरिन्द्राग्नी, एकादशभिरग्निसंबन्धिनो विश्वान्देवांस्तुष्टावेति षण्णवत्यधिकशतेन ( १९६ ) आग्नेयं पर्व द्वितीयम्। ऊनविंशेन शतेन ( ११९ ) ऐन्द्रं पर्व तृतीयम्। अथ षड्भिर्विश्वान्देवान्, नवभिरश्विनौ, नवभिर्मित्रं, सप्तभिर्ऋभून्, सप्तभिरुषसमथ त्रिभिस्त्रिभिरिन्द्रावरुणौ बृहस्पतिं पूषणं सवितारं सोमं मित्रावरुणौ, ततश्चतुर्भिरिन्द्रसोमवरुणबृहस्पतिधातृविधातृसंघं, त्रिभिः पवमानं सोमं तुष्टावेति त्रिषष्ट्या ( ६३ ) वैश्वदेव्यं पर्व चतुर्थम्। इत्थं त्रिभिः पर्वभिरष्टसप्ततानि त्रीणि शतानि ( ३७८ ) वैश्वामित्रार्षेयं भवति।

( १५ ) अथ विश्वामित्रपुत्रो देवरातो विश्वामित्रपुत्रत्वात् प्रागजीगर्तपुत्रत्वे शुनःशेपनामा द्वाभ्यामग्निं त्रिभिर्भगसवितारौ दशभिर्वरुणं तुष्टावेति पञ्चदशभिः शौनः शेपार्षेयं वृतम्। देवरातो भूत्वा एकविंशत्या वरुणं, त्रयोविंशत्याग्निं, नवभिरिन्द्रयज्ञसोमानां निवहं, त्रयोविंशत्यैन्द्रं, त्रिभिरश्विनौ, त्रिभिरुषसं तुष्टावेति द्व्यशीत्या देवरातार्षेयं वृत्तम्। तदित्थं सप्तनवत्या ( ९७ ) दैवरातं पर्व पञ्चमम्।

( १६ ) अथ मधुच्छन्दा वैश्वामित्रो नवभिरग्निं, द्वासप्तत्या मरुत्वन्तमिन्द्रं, ततस्त्रिभिस्त्रिभिर्वायुमिन्द्रवायू मित्रावरुणौ अश्विनौ इन्द्रं विश्वान् देवान् सरस्वतीं चेत्येकविंशत्या वैश्वदेव्यं, दशभिः पवमानं सोमं तुष्टावेतिद्वादशं शतं ( ११२ ) माधुच्छन्दसमार्षेयं पर्व षष्ठम्।

( १७ ) अथ ऋषभो वैश्वामित्रश्चतुर्दशभिरग्निं, नवभिः पवमानं सोमं तुष्टाव रेणुर्वैश्वामित्रोऽष्टादशभिरिन्द्रमिन्द्रासोमौ च दशभिः पवमानं सोमं तुष्टाव। कतो वैश्वामित्रः पञ्चभिरग्निमष्टको वैश्वामित्र एकादशभिरिन्द्रं, पूरणो वैश्वामित्रः पञ्चभिरिन्द्रं, प्रजापतिर्वैश्वामित्रो दशभिरिन्द्रं द्वापञ्चाशता विश्वान् देवाँस्तुष्टावेति त्रिचत्वारिंशेनशतत्रयेण ( ३४३ ) पुत्रार्षेयम्।

( १८ ) अथ जेता माधुच्छन्दसोऽष्टादशभिरिन्द्रमघमर्षणो माधुच्छन्दसस्त्रिभिर्भाविवृत्तमुत्कीलः कात्योऽष्टदशभिरग्निं संवरणः प्रजापत्य ऊनविंशत्या इन्द्रं तुष्टावेत्यष्टचत्वारिंशता (४८) पौत्रार्षेयम्।

अथ देवश्रवा देवताश्च भारतौ राजानाविन्द्रं पञ्चभिस्तुष्टुवतुरिति नैपातिकार्षेयम्। इति सप्ताशीतिशतेनेन ( १८७ ) उत्तमं पर्व सप्तमम्।

तदित्थं पाञ्चपौरुषी, षोडशार्षेयी सप्तपर्वा षोडशाधिकाष्टशतमन्त्रा (८१६) कौशिकी वेदसंहिता पूर्णा ।

( १९ ) कौशिकसंहिताया सोऽयं मन्त्रविभागः प्रकोष्ठे द्रष्टव्यः—

| पुरुषाः | आर्षेयाणि | ऋषयः | | आर्षेयमन्त्राः | | पर्वाणि ७ |
|---|---|---|---|---|---|---|
| १ | १ | कुशिक ऐषीरथिः | | २२ | | |
| २ | २ | गाथी कौशिकः | | २० | ४२ | ४२ |
| ३ | ३ | वैश्वामित्रो गाथिनः | | ३७८ | ३७८ | { १९६ ११९ ६३ |
| | ४ | देवरातो वैश्वामित्रः | | ९७ | | ९७ |
| | ५ | मधुच्छन्दाः ,, | | ११२ | | १२ |
| | ६ | ऋषभः ,, | | २३ | | |
| | ७ | रेणुः ,, | | २८ | | |
| ४। | ८ | कतः ,, | | ५ | ३४३ | |
| | ९ | अष्टकः ,, | | ११ | | |
| | १० | पूरणः ,, | | ५ | | |
| | ११ | प्रजापतिः ,, | | ६२ | | १८७ |
| | १२ | जेता माधुच्छन्दसः | | ८ | | |
| ५ | १३ | अघमर्षणो माधुच्छन्दसः | | ३ | ४८ | |
| | १४ | उत्कीलः कात्यः | | १८ | | |
| | १५ | संवरणः प्राजापत्यः | | १९ | | |
| (x) | १६ | देवाश्रवोदेववातौ भारतौ | | ५ | ५ | |
| ५ | १६ | | | ८१६ | ८१६ | ८१६ |

सोऽयमैतिहासिको वैज्ञानिकश्च द्विविधोऽपि विश्वामित्रो व्याख्यातः

इति कौशिको विश्वामित्रः ।

समीक्षाचक्रवर्ति–श्रीमधुसूदनशर्म–विरचितं महर्षिकुलवैभवं समाप्तम् ॥

# महर्षिकुलवैभवस्य

## —: शुद्धि-पत्रम् :—

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| | | **कश्यपः—** | |
| १ | ८ | षुत्रः | पुत्रः |
| २ | कूर्ममध्ये | घृत्तम् | घृतम् |
| २ | कूर्मकटौ | कश्यय: | कश्यप: |
| ३ | ६ | तल्लक्षण | तल्लक्षणं |
| ३ | ७ | उद्यन्नेवाभू | उद्यन्नेवामू |
| ३ | १५ | तयोरुर्ध्वा | तयोरूर्ध्वा |
| ३ | १८ | विन्दूपलब्ध | ब्रिन्दूपलब्ध |
| ४ | ५ | कूर्म्मो | कूर्म्मे |
| ४ | ८ | द्रष्टार | द्रष्टारं |
| ४ | ११ | शब्दपरतन्त्र | शब्दपरतन्त्रं |
| ४ | १३ | दृष्बते | दृश्यते |
| ५ | ५ | पृथ्वीस्थान | पृथ्वीस्थाना |
| ५ | ८ | अवस्थित | अवस्थिता |
| ५ | १० | श्र यते | श्रूयते |
| ५ | १४ | मृडत नः | मृडता नः |
| ७ | ६ | नार्य्य स | नार्य्यसि |
| ८ | ५ | अदितिमध्य | अदितिमध्यं |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ८ | २४ | दधिमय्यः | दधिमय्यः |
| १० | १३ | इत्थमय | इत्थमयं |
| १० | २३ | गत्या | भक्त्या |
| ११ | १ | प्रदेश | प्रदेशे |
| ११ | २३ | पञ्चसूनुदशभिरिन्द्रं | पञ्चदशभिरिन्द्रं |
| ११ | २३ | रेभ काश्यपौ | रेभसूनू काश्यपौ |
| | | **वसिष्ठः—** | |
| १३ | १८ | वगस्थितोऽयं | स्वर्गस्थितोऽयं |
| १४ | टिप्पण्ये | जुहवानाः | जुह्वानाः |
| १५ | २ | रथ्येवेय | रथ्येवेयं |
| १५ | ३ | तत्रासात् | तत्रासीत् |
| १५ | ४ | महाराजस्याय | महाराजस्यायं |
| १६ | २ | दृप्सं | द्रप्सं |
| १६ | ५ | व्रह्मणा | ब्रह्मणा |
| १७ | ५ | असह्लक्षण | असह्लक्षणा |
| १९ | ३ | वभूवुः | बभूवुः |
| १९ | १७ | कपोश्चित् | कयोश्चित् |
| १९ | २५ | सेव्रोध्यस्य | संब्रोध्यस्य |
| २० | २ | मन्त्रसहिता | मन्त्रसंहिता |
| २० | ४ | तादित्थं | तदित्थं |
| २० | ४ | जन्मकम | जन्मकर्म |
| २० | १६ | तस्या | तस्यां |
| २० | १७ | सेक न्मत्र | सेकान्मित्र |
| २१ | २३ | व्रह्मत्वात् | ब्रह्मत्वात् |
| २२ | ४ | एनद्व्यतिरिका | एतद्व्यतिरिक्ता |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| २२ | १७ | वसुकर्णो | वसुकर्णो |
| २३ | १२ | रूत्तर | रुत्तर |
| २३ | १३ | त्रवर्स्त्रिशन्मन्त्रान् | त्रयस्त्रिशन्मन्त्रान् |
| | | **अगस्त्यः—** | |
| २५ | २ | नास्त्यमःस्या | गस्त्यमत्स्या |
| २५ | १० | भाहिस्थिना | माहिदिथना |
| २५ | १३ | भाग्नेया | माग्नेया |
| २५ | १४ | त्रिविधा | त्रिविधाः |
| २६ | ६ | षरिपाकान् | परिपाकात् |
| २६ | ६ | फेनोनऽसिकता | फेनोषःसिकता |
| २६ | ७ | स्वाभावा | स्वभावा |
| २६ | ११ | प्केनोष | प्फेनोषः |
| २७ | १३ | जालत्वा | जालकत्वा |
| २७ | १६ | र्नौन्नमच्छ्ङ्गः | र्नौन्नमच्छृङ्गः |
| २७ | २० | तदिदमगस्त्य | तदिदमगस्त्यस्य |
| २७ | २३ | निद्विष्यन्ते | निःद्विष्यन्ते |
| २७ | २४ | परोत्त्व्ववहार | परोत्तव्यहारः |
| २७ | २५ | पुराणैकत्रष्ठि | पुराणैकषष्ठि |
| २७ | २५ | गस्त्यरवाग्नि | गस्त्यस्याग्नि |
| २६ | ३ | पुरातनया | पुरातनतया |
| २६ | १३ | भगिनेयाश्चेति | भागिनेयाश्चेति |
| २६ | १४ | नाप्रिय | नाप्रियं |
| २६ | १६ | पचभिः | पंचभिः |
| २६ | २३ | षड्भिर्विश्वाद् जींविताह्वानं | षड्भिर्विश्वान्देवान् जींविताह्वानं |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ३० | २ | सहिता | संहिता |
| ३० | १३ | दुत्क्रामकः | दुत्क्रामुकः |
| | | **भृगुः अङ्गिराः—** | |
| ३२ | ३ | यावद्भिन्नं | यावदभिन्नं |
| ३२ | १०—११ | विधारूषो | विश्वापुरुषो |
| ३२ | १३ | मुकथं | मुक्थं |
| ३२ | १५ | प्राणमयः | प्राणमयो |
| ३३ | २० | तयारेद्धातमां | तयोरद्धातपां |
| ३४ | १८ | अशनंग्रहणा | अशनग्रहण |
| ३४ | २० | मा्त्मान | मात्मानं |
| ३४ | २५ | १-–विष्ठान | १—विष्ठानं |
| ३५ | ३ | मुक्थस्याक | मुक्थस्यार्क |
| ३५ | ६ | उतिष्ठम् | उत्तिष्ठन् |
| ३५ | १६ | कद्र | कद्रू |
| ३६ | १० | एव | एवं |
| ३६ | २४ | सामन्त | सामन्तं |
| ४२ | १७ | श्रासंभूतैः | श्रीसंभूतैः |
| ४३ | १ | नैत्तिरीय | तैत्तिरीय |
| ४५ | ७ | मन्त्रश्रतेः | मन्त्रश्रुते |
| ४५ | २२ | मर्भिणी | गर्भिणी |
| ४६ | १८ | ससज्ञाना | ससंज्ञाना |
| ४६ | २६ | इत्यैतुरेय | इत्यैतरेय |
| ४६ | २६ | श्रतेः | श्रुतेः |
| ४९ | २२ | वाजिश्र | वाजिश्रु |
| ५० | १ | गौविराट् | गौर्विराट् |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ५१ | २५ | यट्विरात्र | यत्र |
| ५१ | २५ | संहन्यते सा | संहन्यते सा विराट् |
| ५२ | १७ | आन्नं | अन्नं |
| ५२ | १६ | अन्निधानी | अभिधानी |
| ५३ | १ | योऽग्निरादित्य | यमोऽग्निरादित्य |
| ५३ | ३ | चतुस्त्रः | चतुस्त्रः |
| ५३ | १३ | यागेव | वागेव |
| ५५ | १६ | परतोऽनुयाजाः | परतोऽनुयाजा |
| ५६ | १५ | प्रतिरुध्मः | प्रतिरुन्ध्मः |
| ५६ | १५ | तस्यप च | तस्यापि च |
| ५६ | १७ | विवक्षितत्वागतेः | विवक्षितत्वावगतेः |
| ५६ | २४ | श्रतौमन्त्रः | श्रुतौ मन्त्रः |
| ५७ | ६ | दविनाभाव | दविनाभावं |
| ५७ | ७ | एतद्वै ब्रह्मः | एतद्वै ब्रह्म |
| ५७ | १२ | अथर्वाणं | अथर्वणां |
| ५७ | २३ | यज्ञस्यावराध्यां | यज्ञस्यापराध्यों |
| ५८ | ७ | संगृएहाति | संगृह्णाति |
| ५८ | २२ | श्रतं | श्रुतं |
| ५९ | २ | सोम | सोमा |
| ५९ | २ | यतमं नः | यातमनः |
| ५९ | १६ | संन्निविष्टेषु | सन्निविष्ठेषु |
| ५९ | २४ | ब्रम्भगिरित्व | ब्रह्मगिरित्व |
| ५९ | २५ | दास्मि | दस्मि |
| ६० | १२ | षिएडं | पिएडं |
| ६० | १८ | सर्वं | सर्व |
| ६१ | ३ | असंघं | असंघ |
| ६१ | ११ | धमा | धर्माः |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ६१ | १६ | विद्यायां | विद्याया |
| ६१ | १६ | नुह्य | नुदुह्य |
| ६१ | २० | ( ५०१७ ) | ( ५।२।७ ) |
| ६२ | ७ | सौषधिर्वनस्पति | सौषाधिर्वनस्पति |
| ६२ | २१ | द्दतम् | या |
| ६३ | १ | ददित्थं | तदित्थं |
| ६४ | १ | द्र्ष्टध्व्या | द्र्ष्टव्या |
| ६४ | १ | मेवासता | मेवास |
| ६४ | ६ | तदन्तरिक्ष | अन्तरिक्ष |
| ६४ | ६ | साऽसौर्धो | द्यौ |
| ६४ | १० | सहस्त्रायुर्जज्ञे | सहस्रायुर्जज्ञे |
| ६४ | १४ | इमामेव | इमामेव |
| ६४ | १७ | इमे | इमं |
| ६४ | २० | सहश्रायुषो | सहस्त्रायुषो |
| ६४ | २१ | मपश्यद्यं | मपश्यद्य |
| ६४ | २२ | आपोइवा | आपोवा |
| ६४ | २२ | तांयत् | तायत् |
| ६५ | ६ | निरवासयत् | मिरवासाययत् |
| ६५ | २२ | मन्वाख्याने | मन्वाख्या |
| ६५ | २३ | ऋचाम्यनूक्तम् | ऋचाभ्यनूक्तम् |
| ६५ | २४ | नाहर्न | नह र्न |
| ६५ | २४ | र्नाद्य | र्नाद्य |
| ६६ | १२ | आदि इति | आदित्यः इति |
| ६६ | १३ | तैत्तरीयके | तैत्तिरीयके |
| ६६ | २५ | दिगदृष्टाः | दिग्दृष्टाः |
| ६७ | ६ | वायादित्या | वाय्वादित्या |
| ६७ | १० | दिवाः | देवाः |

| पृष्ठः | पंक्तिः | अशुद्ध पाठाः | शुद्धपाठाः |
|---|---|---|---|
| ६७ | १२ | त्रिधातुपूर्वं | स्त्रिधातुपूर्वं |
| ६७ | १८ | स्वरुपा | स्वरूपा |
| ६७ | १८ | पूर्वत्वे | पूर्वत्वं |
| ६७ | २१ | आग्निषुोमौ | अग्निषोमौ |
| ६७ | २२ | व्रह्यात्मकत्वे | ब्रह्मात्मकत्वे |
| ६७ | २५ | ( ६। ) | ( ६ कां ) |
| ६८ | १ | आम्योऽद्धयो | आम्योऽद्धयो |
| ६८ | ३ | भस्ताख्यं | भस्त्याख्यं |
| ६८ | ११ | संक्लिप्याष्सु | संक्लिश्याप्सु |
| ६८ | १५ | मश्सान | मश्मान |
| ६८ | २१ | ददुपरिष्टात | तदुपरिष्टात् |
| ६९ | ६ | चतुष्टये | चतुष्टयं |
| ६९ | ११ | व्राह्मणस्पत्यो | व्रह्मणस्पत्यो |
| ६९ | १२ | इष्टाप्स्वभवन् | इहाप्स्वभवन् |
| ६९ | १५ | वय्वादित्याना | वाय्वादित्याना |
| ६९ | १५ | मान्दत्रय | मान्दत्रया |
| ६९ | २२ | विद्यु्त्सोमयोभेदेन | विद्युत्सोमयोर्भेदेन |
| ६९ | २२ | सोमविशे | सोमविशे |
| ६९ | २६ | श्रयते | श्रूयते |
| ६९ | २६ | श्र | श्रुतौ |
| ७० | ७ | दिक् छन्दः | दिक् छन्दः |
| ७० | २१ | रूद्रै | रुद्रै |
| ७० | २५ | देवा | देवता |
| ७१ | १ | प्राणः | प्राणाः |
| ७१ | १ | सर्व्रपितरः | सर्वेपितरः |
| ७१ | ८ | प्रतिप्रजापत्य | प्रतिप्राजापत्य |
| ७१ | ९ | द्वितीय मात्मा | द्वितीय आत्मा |

| पृष्ठः | पंक्तिः | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ७१ | १० | पृथीव्यौ | पृथिव्यो |
| ७१ | १३ | सृष्टे प्रवृष्टे | सृष्टं प्रवृष्टं |
| ७१ | २० | भवतीत्यस्तत्र | भवतीत्यतस्तत्र |
| ७१ | २७ | वरेणं | वरणं |
| ७१ | २७ | इत्यात्तक्षते | इत्याचक्षते |
| ७२ | १३ | सचारी | संचारी |
| ७२ | २१ | भामभिमुखी | भामाभिमुखी |
| ७३ | ११ | ऽङ्गिरश्चाचष्टे | ऽङ्गिरसश्चाचष्टे |
| ७३ | १५ | भेषजैः | भेषजै |
| ७३ | १७ | ॠग्वेद | ॠग्विद |
| ७५ | ७ | त्रिश्वरूपो | त्रिस्वरूपो |
| ७५ | १० | पारीद्यात् | पारोद्यात् |
| ७६ | ८ | मङ्गिरस | मङ्गिरस्त |
| ७६ | ९ | नानाथान् | नानार्थान् |
| ७६ | १३ | सीसा | सीमा |
| ७७ | ८ | रूष स | रुषसि |
| ७८ | ४ | सवम् | सर्वम् |
| ७८ | १२ | कृत्तिकान्तः | कृतिकातः |
| ७८ | १६ | प्रजाषतेःर्वा | प्रजापतेर्वा |
| ७८ | १७ | अग्निरारास्यम् | अग्निरास्यम् |
| ७८ | १८ | शीर्षत् | शीर्षन् |
| ७८ | २२ | छिन्नशीर्पा | छिन्नशीर्षा |
| ७९ | ८ | रोचनाना | रोचनानां |
| ७९ | २६ | सहैकी | सहैकी |
| | | **अत्रिः** | |
| ८२ | ४ | सृष्टिद्वदशे | सृष्टिद्वादशे |
| ८३ | १ | स्वेनाजसाऽऽवृतः | स्वेनौजसाऽऽवृतः |

| पृष्ठः | पंक्तिः | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ८३ | ६ | देशाविशेषस्यत्रियत्वे | देशविशेषस्यात्रेयत्वे |
| ८४ | १६ | स्थान्न | स्यान्न |
| ८५ | ११ | योगत्वात् | योग्यत्वात् |
| ८५ | २२ | प्रम्हण | ब्रह्मण |
| ८६ | १० | भवाङ | मवाङ् |
| ८६ | २४ | प्रच्चरित | प्रचरित |
| ८६ | २६ | तेष्वात्रे यर्षद | तेष्वात्रे पर्षद |
| ८७ | ६ | देवान्नगसोप | देवान्नमसोप |
| ८७ | २५ | लोकः | लोक |
| ८८ | २६ | सूर्य मवाहन् | सूर्यमवाहन् |
| ८६ | ३ | द्विहीयेत | द्विहीयते |
| ८६ | १५ | अत्रोऽत्रिमूतौ | अतोऽत्रिमूतौ |
| ६२ | ३ | तत्तगोत्रान्वये | दत्तगोत्रान्वये |
| ६३ | ११ | सवंदा | सर्वदा |
| ६४ | १५ | ब्रह्मावती | ब्रह्मावर्ती |
| ६५ | १२ | आपोऽभूवन् | आपोभवन् |
| ६५ | २३ | मेकेश्वरौ | मेकेश्वरा |
| ६६ | १६ | पश्चात | पंपात |
| ६७ | २ | ज्वलयंन्त्युत | ज्वलयंत्युत |
| ६७ | ८ | पुत्रोऽभूदिति | पुत्रोभूदिति |
| ६८ | ४ | गन्ध | गन्धर्व |
| ६८ | १३ | प्रक्रारणे | प्रकरणे |
| ६८ | २४ | ग्राणा | प्राणा |
| ६६ | १ | वाजंसनेय | वाजसनेय |
| १०१ | ११ | सलग्न | सलग्नं |
| १०१ | १६ | रल्कोऽर्थो | रक्तोऽर्थो |
| १०२ | १ | पञ्चा | पश्चा |

| पृष्ठः | पंक्तिः | अशुद्ध पाठाः | शुद्धपाठाः |
|---|---|---|---|
| १०२ | ७ | बर्हिर्धानो | बहिर्धानो |
| १०२ | ६ | चात्रिवशे | चात्रिवंशे |
| १०३ | ८ | इत्युभयाः | भयोः |
| १०५ | २ | कमकृत् | कर्मकृत् |
| १०७ | १० | एत्रमन्यात्रा | एवमन्यत्रा |
| १०७ | २१ | प्राणाघनो | प्राणघनो |
| १०८ | १८ | सर्वैः | सर्वैः |
| १०८ | १६ | तमेत्रैकं | तमेवैके |
| १०६ | १८ | मूतिः | मूर्तिः |
| ११० | ५ | मर्स्याच | मर्त्याच |
| ११० | ६ | प्रशिद्धायां | प्रसिद्धायां |
| ११० | १६ | सूर्व्यं शु | सूर्यां शु |
| ११० | २१ | साऽत्रिः | सोऽत्रिः |
| ११७ | ६ | वनपर्वान्तरर्गत | वनपवान्तर्गत |
| | | **कौशिको विश्वामित्रः** | |
| १२२ | ८ | नान्यस्मिन् | तान्यस्मिन् |
| १२४ | ८ | प्राणग | प्राण |
| १२४ | २१ | च्छशत | च्छत |
| १२५ | ५ | संघातोमुस्मिन्निन्द्रप्राणो | संघातेमुष्मिन्निद्रप्राणे |
| १२६ | १३ | एकंभदन्ति | एकीभवान्ति |
| १२७ | १३ | पृथीरसात्मनि | पृथ्वीरसात्मनि |
| १२७ | १७ | व्युत्पत्त्याऽय | व्युत्पत्याऽयं |
| १२७ | २० | प्रतीवी | प्रतीची |
| १२८ | १३ | यदिद | यदिदं |
| १२८ | १७ | पुरव | पुरूरव |
| १२८ | २५ | दीर्त्रायुष्टवाद | दीर्घायुष्ट्वाद् |
| १२८ | २७ | मिक्ष्वाकतः | मिक्ष्वाकुतः |
| १३० | १ | बृत्तिरपि | वृत्तिरपि |
| १३० | २१ | धुच्छन्दो | मधुच्छन्दो |
| १३० | २२ | सतं | शतं |
| १३० | २० | देवाश्रवो | देवश्रवो |

॥ इति ॥

# प्रेसों में छप रहे ग्रन्थ

## संस्कृतग्रन्थ

१. शकुनप्रदीप, लावण्यशर्मरचित, सम्पादक-मुनि श्रीजिनविजय।
२. त्रिपुराभारतीलघुस्तव, धर्माचार्यप्रणीत, सम्पादक-मुनि श्रीजिनविजय।
३. करुणामृतप्रपा, भट्ट सोमेश्वरविनिर्मित, सम्पादक-मुनि श्रीजिनविजय।
४. बालशिक्षाव्याकरण, ठक्कुर संग्रामसिंह रचित, सम्पादक मुनि श्रीजिनविजय।
५. पदार्थरत्नमंजूषा, पं. कृष्णमिश्रविरचित, सम्पादक मुनि श्रीजिनविजय।
६. वसन्तविलास फागु, अज्ञातकर्तृक सम्पादक-श्री एम. सी. मोदी।
७. नन्दोपाख्यान, अज्ञातकर्तृक, सम्पादक श्री बी.जे. सांडेसरा।
८. चान्द्रव्याकरण, आचार्य चन्द्रगोमिविरचित, सम्पादक-श्री बी. डी. दोशी।
९. वृत्तजातिसमुच्चय, कवि विरहाङ्करचित, सम्पादक-श्री. एच. डी. वेलणकर।
१०. कवि दर्पण, अज्ञातकर्तृक ,, ,, ,,
११. स्वयंभूछन्द, कविस्वयंभूरचित ,, ,, ,,
१२. प्राकृतानन्द, रघुनाथकविरचित, सम्पादक-मुनि श्रीजिनविजय।
१३. कविकौस्तुभ, पं. रघुनाथरचित, ,, श्री एम. एन. गोरी।
१४. एकाक्षर नाम-माला, सम्पादक-मुनि श्रीरमणीकविजयजी।
१५. नृत्यरत्नकोष, भाग २ महाराणा कुंभकर्णप्रणीत, सम्पा.-डॉ. प्रियबाला शाह।
१६. इन्द्रप्रस्थप्रबन्ध, सम्पादक-डॉ. दशरथ शर्मा।
१७ हमीरमहाकाव्यम, नयचन्द्रसूरिकृत, सम्पादक-मुनि श्रीजिनविजय।
१८. स्थूलिभद्रकाकादि, सम्पादक-डॉ. आत्माराम जाजोदिया।
१९. वासवदत्ता, सुबन्धुकृत, सम्पादक-डॉ. जयदेव मोहनलाल शुक्ल।
२०. घटखर्परादि पंचलघुकाव्यानि, सम्पादक-पं. अमृतलाल मोहनलाल।
२१. भुवनदीपक, यावनाचार्यकृत, सम्पादक-पं. पुरुषोत्तमभट्ट।
२२. वृत्तमुक्तावली, कवि श्रीकृष्णभट्टकृत, सम्पादक-पं श्री मथुरानाथजी भट्ट।

## राजस्थानी और हिन्दी

२३. मुंहता नैणसीरी ख्यात भाग२ मुंहता नैणसीकृत, संपा.-श्री बद्रीप्रसाद साकरिया
२४. गोरा बादल पद्मिणी चउपई, कवि हेमरतनकृत सम्पा-श्रीउदयसिंह भटनागर,
२५. राजस्थान में संस्कृत साहित्य की खोज, एस. आर. भण्डारकर, हिन्दी अनुवादक-श्री ब्रह्मदत्त त्रिवेदी।
२६. राठोड़ांरी वंशावली, सम्पादक-मुनि श्रीजिनविजय।
२७. सचित्र राजस्थानी भाषासाहित्यग्रन्थसूची, सम्पादक-मुनि श्रीजिनविजय।
२८. मीरां-बृहत्-पदावली स्व. पुरोहित हरिनारायणजी विद्याभूषण द्वारा संकलित, सम्पादक-मुनि श्रीजिनविजय।
२९. राजस्थानी साहित्य संग्रह, भाग ३ संपादक-श्री लक्ष्मीनारायण गोस्वामी।
३०. सूरजप्रकास, कविया करणीदान कृत, संपादक-श्री सीताराम लालस।
३१. मत्स्य प्रदेश की हिन्दी को देन, संपादक-डॉ. मोतीलाल गुप्त।
३२. रुक्मिणीहरण-सांयांजी झूला कृत, संपादक-पुरुषोत्तमलाल मेनारिया।

विशेष—पुस्तक विक्रेताओं को २५% कमीशन दिया जाता है।

---

मुद्रक : कुशल प्रिन्टर्स, मणिहारों का रास्ता, जयपुर